**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्** ॥ २. ४. १७ ॥

**भेदश्रुतेः** ॥ २. ४. १८ ॥

**वैलक्षण्याच्च** ॥ २. ४. १९ ॥

"त एतस्यैव सर्वे रूपमभवन्" इति वाक्यात् "अत एतेनाख्यायन्ते प्राणाः" इति प्राणश्रुतेश्च इन्द्रियाणां प्राणमात्रत्वे प्राप्ते प्राणसंवादादिगतैः बहुभिः भेदैर्लिङ्गैः प्राणादर्थान्तरत्वे सति इन्द्रियाणां वाक्यं बाध्यते । प्राणश्रुतिश्च नेन्द्रियाणां प्राणत्वविधिपरा, किन्तु इन्द्रियाणां पृथक् प्राणसंज्ञाविधिपरा इत्यन्यपरा श्रुतिश्च बहुभिः लिङ्गैः बाध्येत्युक्तम् ॥

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्** ॥ २. ४. २० ॥

**मांसादि भौमं यथाशब्दमितरयोश्च** ॥ २. ४. २१ ॥

**वैशेष्यात्तु तद्वादस्तद्वादः** ॥ २. ४. २२ ॥

यद्यपि 'जीवेनेति' पदस्य 'व्याकरवाणि' इति प्रधानक्रियया संबन्धो युक्तः, न 'अनुप्रविश्य' इति गुणभूतक्रियया, तथापि यत्राकाङ्क्षासन्निधियोग्यत्वं तेन सम्बन्धो युक्तः इति न्यायेन नदीसमुद्रादिव्याकरणे योग्यताद्यभावात्, प्रवेशने च योग्यतादिभावात् जीवस्य प्रवेशनेन सम्बन्धः इति व्याकरणे सैन्यसङ्कलनवत् जीवलक्षणस्वतन्त्रकर्त्रन्तरव्यवधानाभावात् अन्याव्यवधानेन ब्रह्मकर्तृकं नामरूपव्याकरणमित्युक्तम् ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे
द्वितीयाध्यायस्य चतुर्थः पादः ॥

**समाप्तश्च द्वितीयोऽध्यायः ॥**

---

१. T and M. इन्द्रियप्राणानाम्
२. G omits भेद
३. G and T omit च
४. T. सैव सङ्कल
M. सैव सङ्कल्पनलक्षण
५. T. अस्य व्यव-
६. M. कर्तृत्वं

# अथ तृतीयोऽध्यायः

## प्रथमः पादः

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥
३. १. १ ॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ३. १. २ ॥

प्राणगतेश्च ॥ ३. १. ३ ॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३. १. ४ ॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३. १. ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३. १. ६ ॥

भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥ ३. १. ७ ॥

"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति यदि आपः पुरुषवचसो भवन्ति इति क्रियापदेन अप्शब्दस्य[1] संबन्धः, तथापि आहुतीनां होमद्रव्यापेक्षायां[2] संनिधानात् आप[3] एव पञ्चानामाहुतीनां होमद्रव्यतया संबध्यन्ते ; ततश्चायं वाक्यार्थः संवृत्तः—अपां पञ्चभिराहुतिभिः[4] हूयमानानां पञ्चम्यामाहुतौ

१. T and M omit अप्शब्दस्य

२. T and M. पेक्षाणां

३. G and M. अर्थादापः

४. G. पञ्चभिराहूयमानानां पञ्चम्यामाहुतौ पुरुषाकारेण परिणामः तथा "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्युपसंहारवाक्य-...स्यमेवार्थः, वाक्यसामान्यात्। एवमुपक्रमोपसंहारयोः अपां पञ्चाहुतिभिः संबन्धे सिद्धे मध्यवर्तिनां श्रद्धासोमवृष्ट्यन्नरेतसामप्यपामेवावस्थाविशेषत्वोपपत्तौ द्रव्यभेदकल्पनानुपपत्तेः द्युलोकाद्यधिकरणभेदादेव आहुतिभेदोपपत्तेश्च पूर्वापरमहावाक्यपर्यालोचनायां अप्शब्दवाच्यानां त्रयाणां भूतानां पञ्चसु स्थानेषु वाक्यप्रमाणादवगतः etc.

पुरुषाकारेण परिणाम इति; तथा "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्युपसंहारवाक्यस्याप्ययमेवार्थः, वाक्यसाम्यात्; एवमुपक्रमोपसंहारयोः अपामेव पञ्चभिराहुतिभिः संबन्धे सिद्धे मध्यवर्तिश्रद्धासोमवृष्ट्यन्नरेतसामप्यपामेवावस्थाविशेषत्वोपपत्तौ द्रव्यभेदकल्पनाद्यनुपपत्तेः, द्युलोकाद्यधिकरणभेदादेव आहुतिभेदोपपत्तेश्च पूर्वापरमहावाक्यपर्यालोचनायां अप्शब्दवाच्यानां त्रयाणां भूतानां पञ्चसु स्थानेषु हूयमानानां पञ्चम्यामाहुतौ पुरुषाकारेण परिणामः वाक्यप्रमाणादवगतः; तथा प्रथमाहुतिपरिणामे सोमभावे[1] पञ्चमाहुतिपरिणामे च[2] गर्भे अपां चेतनसंबन्धावगमलिङ्गात् नियमेन भूताधारप्राणिपरिवृतस्य जीवस्य[3] पञ्चसु स्थानेषु गमनलिङ्गाच्च अप्शब्दवाच्यभूतपरिवृतो जीवः पञ्चसु स्थानेषु रंहतीति वाक्यलिङ्गाभ्यां न भूतोपादाने प्रयोजनमस्ति, सर्वत्र विद्यमानत्वात् इति न्यायानुगृहीतं तृणजलूकादिदृष्टान्तलिङ्गं बाधित्वा इति सिद्धम् ॥

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३. १. ८ ॥**

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३. १. ९ ॥**

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३. १. १०**

**सुकृतदुष्कृते एवेति तु बादरिः ॥ ३. १. ११ ॥**

यद्यपि यत्किञ्चिद्यावत्सम्पातशब्दौ ऐहिकामुष्मिककृतकर्मफलोपभोगवचनाववरोहतां[4] अनुशयाभावे लिङ्गभूतौ, तथापि रमणीयचरणाः कपूयचरणाः इति शब्दयोः ब्राह्मण्यादिजात्यारम्भकाणामैहिककर्मणां सद्भावे लिङ्गत्वात् ऐहिकामुष्मिककर्मसद्भावविषयविशेषलिङ्गेन संकोचोपपत्तेः आमुष्मिककर्मविषयत्वात् यत्किञ्चिद्यावत्संपातशब्दयोः ऐहिकभोगनिमित्तकर्मानुशयसद्भावो दर्शितः ॥

१. T omits प्रथमा···सोमभावे
२. T omits च
३. G adds एव
४. T and M. कर्मोपभोग

अनिष्टादिकारिणामपि च श्रुतम् ॥ ३. १. १२ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥
॥ ३. १. १३ ॥

स्मरन्ति च ॥ ३. १. १४ ॥

अपि च सप्त ॥ ३. १. १५ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ ३. १. १६ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३. १. १७ ॥

न तृतीये तथोपलब्धेः ॥ ३. १. १८ ॥

स्मर्यतेऽपि च लोके ॥ ३. १. १९ ॥

दर्शनाच्च ॥ ३. १. २० ॥

तृतीयशब्दावरोधः संशोकजस्य ॥ ३. १. २१ ॥

"ये वै केचास्माल्लोकात् प्रयन्ति" इति इष्टानिष्टादिकारि[1]सामान्यविषयं चन्द्रलोकगमनवाक्यम्; तथा "वैवस्वतं संगमनं जनानाम्" इति च इष्टानिष्टादिकारिसामान्यविषयं यमलोकगमनवाक्यम्। तत्राविशेषेण चन्द्रगमनवाक्यं विद्याकर्मविशेषितमार्गद्वयभ्रष्टानामनिष्टादिकारिणां तृतीयस्थानगमनविषयविशेषवाक्येन इष्टादिकारिविषयविशेषे[2] नियम्यते। तथाविशेषेण यमलोकगमनविषयं वाक्यमपी[3]ष्टादिकारिणां चन्द्रगमनवि[4]षयवाक्येनानिष्टादिकारिविषयविशेषे नियम्यत इति सामान्यवाक्यद्वयं विशेषवाक्याभ्यां नियम्यानिष्टादिकारिणां यमगमनमुक्तम्[5] ॥

[6]साभाव्यापत्तिरुपपत्तेः ॥ ३. १. २२ ॥

१. T and M. कारिणां सामान्य
२. T and M. विशेषो
३ G and M omit अपि
४. M omits विषय
५. T and M add इत्युक्तम्
६. T and M add तत्

यद्यपि भवति धातुः जीवस्याकाशादि[1]भावपरिणामे श्रुतिर्भवति, तथाप्युत्तरत्र रमणीयचरणादि[2]संयुक्तस्य चेतनस्य आकाशादितिलमाषान्तेभ्यः स्वेनैव रूपेण अभिनिष्क्रमणान्य[3]थानुपपत्तिलक्षणया श्रुतार्थापत्त्या अन्यस्यान्य[4]भावानुपपत्त्य-नुगृहीतै[5]तया[गृहीतया] विरोधात् श्रुतेरुपच[6]रिततद्भावापत्तिविषयत्वमुक्तम् ॥

## नातिचिरेण विशेषात् ॥ ३. १. २३ ॥

यद्यप्याकाशादिसाम्यं गतस्य[7] "अ[8]तो वै खलु दुर्निष्प्रपतरम्" इति अ[9]तः-शब्दस्य प्रकृतसर्वविषयत्वात् शीघ्रनिष्क्रमणकारणं नोपलभ्यते, तथापि "त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इत्येकवाक्योपात्तव्रीह्यादिभावात् अतःशब्दपरामृष्टात् दुःखेन निष्क्रमणं तरप्प्रत्ययेन विशेष्यमाणं भिन्न[10]वाक्योपात्तात् आकाशादिवर्षणान्तात् प्रकृतात् सुखेन निष्क्रमणमर्थापत्त्या गमयतीत्युक्तम् ॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३. १. २४ ॥

यद्यपि व्रीह्यादिभावेन जन्मश्रुतिः मुख्यमेवानुशयिनां[11] जन्म प्रतिपादयति, तथापि न व्रीह्यादिभावेन अनुशयिनां[12] मुख्यं जन्म सम्भवति, अस्मिन् प्रकरणे कर्मव्यापारसङ्कीर्तनशून्यतयाभिधानात् आकाशादिभावाभिधानवत् इत्यनुमानात्, तथा ब्राह्म[13]णादिजन्मनः कर्मव्यापारपूर्वकत्व[14]सङ्कीर्तनं व्यर्थम्; प्रागपि व्रीह्यादिभावेन

१. T and G omit भाव
२. M. संयुक्तस्य आकाशादितादात्म [त्म्य]भावापत्तौ तेभ्यश्च एतेनैव G. संयुक्तस्य आकाशादि
३. T and M omit अन्यथा
४. T and M add पूर्वसिद्ध
५. T and M. पत्तिगृहीततया
६. M. उचिततद्भाव
७. T adds अतो व्रीहयादिभावात्
८. T. अतःशब्द. वै खलु
९. G and M omit अतःशब्दस्य
१०. T. व्रीहिवाक्य
११. and १२. M. शयिना
१३. G. ब्राह्मण्याश्वादिजन्यकर्म
१४. M omits पूर्वकत्व

जन्मास्ति चेत्, अतस्तन्नास्तीति श्रुतार्थापत्त्या[1][2], तथोत्तराहुतिसंबन्धश्रुतिर्नोप-[3]
पद्यते व्रीह्यादिभावे तत्पचनादिना[4][5] प्रवासप्रसङ्गादिति श्रुतार्थापत्त्यन्तरेण जन्मश्रुतेः
उपचरितार्थत्वं दर्शितम्[6] ॥

**अशुद्धमिति चेन्न शब्दात्** ॥ ३. १. २५ ॥
**रेतःसिग्योगोऽथ** ॥ ३. १. २६ ॥
**योनेः शरीरम्** ॥ ३. १. २७ ॥

यद्यपि पशुहिंसनस्य प्रतिषेधसामर्थ्यात् अनर्थहेतुत्वम्[7], क्रतुविधिसामर्थ्याच्च
क्रतूपकारश्च[8] इत्युभयं न विरुध्यते, एकस्यापि साधनस्य लोके अर्थानर्थहेतुत्वदर्शनात्,
तथापि अनर्थं परिहृत्यैव क्रतूपकारद्वारेण[9] अर्थबाहुल्यहेतुत्वाभावे विधानमनुपपन्नमिति
अर्थानर्थहेतुतया विरोधमुद्भाव्य सावकाशनिरवकाशतया प्रामाण्यं व्यवस्थापितम्।
तथा करणांशे प्रवृत्ती रागनिबन्धनेतिकर्तव्यांशे[10] प्रवृत्तिः विधिनिबन्धनेति
विभागं कल्पयित्वा श्येनयागे हिंसात्मके करणरूपे रागनिबन्धना प्रवृत्तिरिति तत्र
प्रतिषेधविध्यवकाशमङ्गीकृत्य पशुहिंसायां विधिनिबन्धनप्रवृत्तिकायां प्रतिषेधविधिः
निरस्त इति दर्शितम्[11] ॥

इति प्रकाशात्मयतिविरचिते शारीरकन्यायसंग्रहे
**तृतीयाध्यायस्य प्रथमः पादः** ॥

१. G. श्रुत्यर्थापत्त्या
२. T and M add च
३. M. संबन्धः श्रुतः नोप
M. संबन्धिश्रुतिः
४. G. तद्धननादौ
५. G and T add च
६. T adds इति
७. T. पापहेतुत्वम्
८. G. क्रतूपकरणत्वम्
९. G. क्रतूपकरणद्वारेण
T. क्रतुकारणाद्वा......नर्थमेतुत्वभावे
१०. M. निबन्धनः इतिकर्तव्या
११. T and M omit दर्शितम्

# अथ द्वितीयः पादः

---

संध्ये सृष्टिराह हि ॥ ३. २. १ ॥

निर्मातारं चैके पुत्रादयश्च ॥ ३. २. २ ॥

मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३. २. ३ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३. २. ४ ॥

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ३. २. ५ ॥

देहयोगाद्वा सोऽपि ॥ ३. २. ६ ॥

स्वप्ने द्रष्टृ[1]व्यतिरिक्ताः सर्वे पदार्थाः अर्थक्रियासामर्थ्यलक्षणसत्त्वोपेताः चेतनेनाभिसन्धिपूर्वकं निर्मीयमाणत्वात्, जाग्रद्वत्, आगामिशुभाशुभविषयविज्ञानस्य स्वप्नस्त्र्यादिदर्शनजन्यत्वमन्वयव्यतिरेकलक्षणार्थापत्तिसमधिगतमित्यनुमानार्थापत्तिभ्यां[2] स्वप्नप्रपञ्चस्यार्थक्रियाकारित्वे[3] प्राप्ते देशकालविशिष्टार्थक्रियासमर्थप्रमात्रादिविषयबाधकप्रत्यक्षेण अर्थक्रियासमर्थरूपस्यैव बाधान्यथानुपपत्त्या, "न तत्र रथाः" इति श्रौतनिषेधान्यथानुपपत्त्या चार्थक्रियासमर्थाधिष्ठानवैपरीत्यस्यार्थक्रियाशून्यत्वस्यावगमादनुमानबाधो दर्शितः । [4]पदार्थस्वरूपप्रयुक्तार्थक्रियाशून्यतयास[5]त्त्वेऽपि शुभाशुभादि[6]व्याप्तिलक्षणधर्मोपाधावर्थक्रियाकारित्वस्याङ्गीकरणात् पदार्थानां स्वरूपतो मिथ्यात्वं दर्शितम् । स्थूलशरीरोपाधावेवात्मनो व्यावहारिकवस्तुसंस्प[7]र्श इति दर्शयितुम्[8] ॥

१. M omits द्रष्टृ

२. G. अनुमानार्थापत्तिस्वप्न

३. M. प्रपञ्चस्याक्रिया

४. G notes as alternative readings तथार्थ and तदार्थ

५. T. सममपि

६. T and M. शुभाशुभादिना

७. M. संसर्ग

८. T and M add इति

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च** ॥ ३. २. ७ ॥

**अतः प्रबोधोऽस्मात्** ॥ ३. २. ८ ॥

नाडीपुरीतद्ब्रह्मसु प्रत्येकमधिकरणसप्तमीश्रवणात् उपाधिविशिष्टजीवाधारत्वसंभवाच्च प्रत्येकमधिकरणत्वे प्राप्ते विकल्पपक्षे च अन्यतम[1]बाधप्रसङ्गात् सति संभ[2]वे नैरपेक्ष्यधर्ममेव बाधित्वा स[3]मुच्चयोपादानमेव युक्तमिति न्याये[4]न च नाडीपुरीततोरधिकरणसप्तमीबाधप्रसङ्गात् असंभवे प्राप्ते नाडीपुरीतद्ब्रह्मणां[5] समुदायविषयैः [6]श्रौतैर्लिङ्गैः नाडीपुरीतत्सप्तम्योः सामीप्यम[7]र्थमुपादाय ब्रह्मण्यधिकरणसप्तमीपरिग्रहेण च[8] नाडीपुरीतत्समीपवर्ति ब्रह्म सुप्तिस्थानं दर्शितम् ॥

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः** ॥ ३. २. ९ ॥

इह उपाधिभेदात्[9] जीवभेदो देहान्तरेषु प्रसिद्धः । सुप्तस्यापि पूर्वोपाधिप्रविलयात्[10], उत्तरोपाध्युत्पत्तौ च उपाधिभेदात्, सुप्तादन्यस्य जीवस्य उत्थाने प्राप्ते कर्मानुस्मृतिशब्दविधिभिः प्रति[11]पन्नजीवैक्योपपाद[12]नया अज्ञानमेवानादिभूतं[13] स्थूलसूक्ष्मतामाप[14]न्नं स्वकार्यान्तःकरणावच्छिन्नं स[15]त् जीवोपाधिरित्युक्तम् ॥

**मुग्धेऽर्धसंपत्तिः परिशेषात्** ॥ ३. २. १० ॥

जीवस्यावस्थाचतुष्टयप्रसिद्धिनियमात् चतसृभ्यः लक्षणभेदप्रतिभासः मुग्धा-

१. G. अन्यतमपदार्थबाध
२. M. भावे
   G. सम्भवे बाधायोगात्
३. G. समुच्चयोपादानत्वमेव
   M. समुच्चयोपपादनमेव
४. G and T. न्यायस्य
५. G. ब्रह्मसमुच्चय
   T. ब्रह्मणां समुच्चय
६. T and M ज्ञातैः लिङ्गैः
७. G. सामीप्यार्थ
८. T omits च
९. T adds जीवभेदात्
१०. T. प्रलयात्
११. G. प्रतीतजीवैक्य
१२. G and T. उपपादनाय
१३. G. सिद्धम्
१४. G. सूक्ष्मोत्पन्न
    T. सूक्ष्मापन्न
१५. T and M omit सत्

वस्थायां बलवान्, प्रसिद्धिनियमस्य[1] मुग्धावस्थायाः सर्वजीवविषयत्वाभावात् सुषुप्त्युत्क्रान्त्योः अंशसाङ्कर्यादप्युपपत्तेः । अतो लक्षणभेदात् पञ्चम्यवस्था मुग्धसम्पत्तिरित्युक्तम्[2] ॥

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ३. २. ११ ॥
न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३. २. १२ ॥
अपि चैवमेके ॥ ३. २. १३ ॥
अरूपवदेव हि तत्प्रधानत्वात् ॥ ३. २. १४ ॥
प्रकाशवच्चावैयर्थ्यात् ॥ ३. २. १५ ॥
आह च तन्मात्रम् ॥ ३. २. १६ ॥
दर्शयति चाथो अपि स्मर्यते ॥ ३. २. १७ ॥
अत एव चोपमा सूर्यकादिवत् ॥ ३. २. १८ ॥
अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३ २. १९ ॥
वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ ॥ ३. २. २० ॥
दर्शनाच्च ॥ ३. २. २१ ॥

आकाशादिकार्यभेदैः तदुपाध्यवच्छिन्नचिद्भेदैश्च कार्यकारणभावेन वा अंशांशिभावेन वा सामान्यविशेषभावेन वा ब्रह्मणो भिन्नाभिन्नत्वं सप्रपञ्चता सत्यज्ञानान[3]न्दलक्षणपरापरसामान्यत्रयावलम्बेन[4] एकै[5]व्यक्तिमात्रात्मता निष्प्रपञ्चता तदुभयविधि[6]मुभयविधश्रुतिप्राप्तं विकारान्तर्बहिर्देशभेदेन ब्रह्मणि व्यवस्थापयितुं न शक्यते, देशलक्षणभेदाभ्यां ब्रह्मभेदप्रसङ्गात्; नापि स्थितिप्रलयकाल[7]भेदेन ब्रह्ममात्रोपाधिश्रवण-

१. M. निमित्तस्य
२. G. मुग्धिरित्युक्तम्
३. T and M. सम्यग्ज्ञान
४. M. सामीप्यतयावल
५. G. ऐक्य
६. T and M. तदुभयविधश्रुति
७. G omits काल

विरोधात्; नापि कार्यकारणब्रह्मभेदेन कारणब्रह्मण एव, उभयाकारश्रवणात्; नापि कारणत्वविमुक्तब्रह्मभेदेन[1] ब्रह्मद्वयाभावात्; एकस्यैव उभयलक्षणत्वे[2] धर्मिभेदात् इति। यद्यप्येवमसाङ्कर्येण रूपद्वयव्यवस्था न संभवति, तथाप्युभयविधश्रुतिसामर्थ्यादेकैकोपाधौ उभयात्मकं ब्रह्मेति निश्चिनुमः। यद्यपि निष्प्रपञ्चब्रह्मपरनिषेधवाक्यप्रकरणस्थानाम् "द्वे वाव ब्रह्मणो रूपे" इत्यादीनां निषेध्यवस्तुसमर्पणेनैव उपक्षयात् न पृथक् प्रपञ्चप्रतिपादने[3] तात्पर्यम्[4], तथापि उपासनाप्रकरणपठितानां सप्रपञ्चवाक्यानां स्वशेष्युपासनविरोधाभावात्[7] तत्परनिषेधवाक्यविरोधेऽपि स्वार्थे प्रामण्यात् सप्रपञ्चं ब्रह्म इति प्राप्ते न्यायोऽवतार्यते—चैतनस्य[5] भेदासंसर्गिता पुरुषार्थ इति स्मृतिसुषुप्त्योः[6] दर्शनात् तत्परनिषेधवाक्यविरोधे सति अन्यपराणां सविशेषवाक्यानां स्वशेषिविरोधाभावेऽपि[8] दौर्बल्यात् तत्परवाक्यविरोधे सति अतत्पराणां दौर्बल्यम् इत्येतावता स्वशेषिवाक्यविरोधेऽपि अन्यपरत्वमेव दौर्बल्यनिमित्तमिति न्यायेन सप्रपञ्चत्वमुपचरितमुपादाय[9] निष्प्रपञ्चमेव ब्रह्म इति निरूपितम्॥

अथ वा एकस्य उभयरूपविरोधे सति "इन्द्रो मायाभिः" "नासदासीत्[10] नो सदासीत्" "तम आसीत्" इति सदसद्विलक्षणानिर्वचनीयमायाख्योपाश्रयेण[11] तत्त्वातत्त्वविषयभेदात् रूपद्वयं व्यवस्थापितम्[12]॥

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥**

**३. २. २२॥**

१. G and T. कारणं तद्विनिर्मुक्त
२. T. उपलक्षणवद्धर्मि
M. उपलक्षणत्वं धर्मि
३. G. प्रतिपादयितुम्
४. G adds अस्ति
५. G. चैतन्यस्य
६. G. श्रुति
७. G स्वशेष्युपासनाविधिविरोधा
८. G adds विधि
९. M. प्रपञ्चमुप
१०. T omits नास......दासीत्
११. T. मायोपाध्याश्रयेण
१२. T adds इति

तदव्यक्तमाह हि ॥ ३. २. २३ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३. २. २४ ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ ३. २. २५ ॥

अतोऽनन्तेन तथा हि लिङ्गम् ॥ ३. २. २६ ॥

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३. २. २७ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३. २. २८ ॥

पूर्ववद्वा ॥ ३. २. २९ ॥

प्रतिषेधाच्च ॥ ३. २. ३० ॥

वस्त्वन्तराभावविशिष्टवस्त्वन्तरज्ञानस्यैव निषेधवाक्यार्थत्वात्[1] सति सम्भवे प्राप्तस्य[2] कृत्स्ननिषेधकल्पनायोगात्[3] एकांशस्यैव निषेधकल्पनं लघीय: इति न्यायेन[4] ब्रह्मतद्रूपयो: अन्यतराभावविशिष्टतयान्यतरस्य प्रतिपत्तिद्वित्वे[5] प्राप्ते अर्थत: प्राधान्येऽपि ब्रह्मण: शब्दतो राजवत्[6] गुणभूतत्वात् शब्दत: प्रधानतया प्रकृतं रूपद्वयमितिशब्देन परामृश्य प्रतिषिध्यते। ब्रह्म तु केवलं[7] द्रष्टृमात्रं[8] निष्प्रपञ्चं परिशिष्यत इति दर्शितम् ॥

परमत: सेतून्मानसंबन्धभेदव्यपदेशेभ्य: ॥ ३. २. ३१ ॥

सामान्यात्तु ॥ ३. २. ३२ ॥

बुद्ध्यर्थ: पादवत् ॥ ३. २. ३३ ॥

स्थानविशेषात् प्रकाशादिवत् ॥ ३. २. ३४ ॥

१. G. निषेधशब्दार्थत्वात्
२. T. प्राप्तकृत्स्न
३. G. कृत्स्नस्य
४. G. न्यायाच्च
५. G. प्रतिपत्त्यस्त्वे
६. G. राजादिवत्
७. G adds प्रतिषेधादीनां केवलम्
८. M. दृश्यमात्रम्

**उपपत्तेश्च** ॥ ३. २. ३५ ॥

**तथान्यप्रतिषेधात्** ॥ ३. २. ३६ ॥

**अनेन सर्वगतत्वमायामशब्दादिभ्यः** ॥ ३. २. ३७ ॥

ब्रह्म सद्वितीयम्, सेतुव्यपदेशवत्त्वात्, प्रसिद्धसेतुवत्। ब्रह्म सद्वितीयम्, उन्मानव्यपदेशवत्त्वात्, गवादिवत्। ब्रह्म सद्वितीयम्, संबन्धव्यपदेशवत्त्वात्, रज्जुघटवत्। ब्रह्म सद्वितीयम्, भेदव्यपदेशवत्त्वात्, घटादिवत्—इत्यनुमान-चतुष्टयस्य "एकमेवाद्वितीयम्" "यस्मात् परं नापरमस्ति किञ्चित्" इत्यागम-विरुद्धत्वं हेतूनां चोपचरितविषयत्वेन मुख्यसिद्धत्वं च दर्शितम् ॥

**फलमत उपपत्तेः** ॥ ३. २. ३८ ॥

**श्रुतत्वाच्च** ॥ ३. २. ३९ ॥

**धर्मं जैमिनिरत एव** ॥ ३. २. ४० ॥

**पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॥ ३. २. ४१ ॥

'यागेन स्वर्गं भावयेत्' इति वाक्यार्थे फलभावनां प्रति यागस्य करणभावनया भाव्यमानस्य[1] करणत्वमवगम्यमानं भाव्यस्वर्गादिनिर्वर्तनद्वारेण यागः फलभावनां प्रति करणमित्यवगमयति, फलभावनाकरणस्य कुठारादेः स्वेयं[2] फलभावनाविषयीकृतस्य द्वैधीभावनिर्वर्तनेन फलभावनाकरणत्वदर्शनात्। ततश्च यागस्य फलभावनाकरणत्वमवगम्यमानं कालान्तरभाविस्वर्गसाधनसमर्थं[3] यागजन्यमपूर्वं नाम किञ्चिदर्थापत्त्या कल्पयति। अपूर्ववाक्यार्थपक्षेऽपि लिङादिप्रत्ययेन धात्वर्थकर्तव्यतायां लोके गृहीतसम्बन्धेन वेदेऽपि स्वर्गकामस्य[4] यागकर्तव्यतायामभिहितायाम् तदन्यथानुपपत्त्या यागस्य[5] स्वर्गसाधनत्वं सिद्ध्यति। पुनश्च तदन्यथानुपपत्त्या

१. M. भाव्यस्य

२. G. स्वयं करणभावना
M. स्वधर्मफलभावना

३. G. स्वर्गदर्शनात् ततश्च यागसाधन

४. M. कामयाग

५. G omits यागस्य...नुपपत्त्या

अपूर्वं परिकल्प्य लिङादेः तदभिधायकत्वं च कल्पयित्वा अपूर्ववाक्यार्थः परि[1]कल्प्यते । अपूर्वव्यतिरिक्तनियोगवाक्यार्थपक्षेऽपि स्वर्गकामस्य यागे नियोगान्यथानुपपत्त्या यागस्य स्वर्गसाधनत्वं परिकल्प्य[2] ततो[3]ऽपूर्वं परिकल्प्यते । एवं त्रिष्वपि पक्षेषु[4] यागस्य स्वर्गसाधनत्वान्यथानुपपत्तिः[5] स्वर्गसाधनसमर्थं निरपेक्षमर्थं[6] कल्पयन्ती परमेश्वरमर्थवादप्राप्तं फलदातारं निरुणद्धीति प्राप्ते शुभाशुभव्यामिश्रकर्मफलं[7] कर्मतत्फलसंप्रदान[8]देशकालनिमित्तविपाकादिविषयविज्ञानवता केनचित्प्रदीयमानं भवितुमर्हति, व्यवहितकर्मफलत्वात्, सेवादिकर्मफलवत् इत्यनुमानानुगृहीतश्रुत्युपस्थापितेश्वरपदार्थबाध[9]कल्पनाद्वरं[10] [11]अन्यनैरपेक्ष्यधर्मबाधकल्पनम्, वियदधिकरणन्यायेन इत्यन्वयव्यतिरेकसिद्धशरीरेन्द्रियादिसाधनव्य[12]पेक्षादपूर्वात् फलसिद्धिवत् ईश्वरापेक्षादपूर्वापेक्षादीश्वराद्वा[13] ईश्वरात् फलसिद्धिः । अथवा श्रुत्यनुमानप्राप्तेश्वरे [14]प्राक्प्रवृत्तकर्मानुसन्धानेन लौकिकैश्वर्यवत् फलदातरि [15]सत्यश्रुतकल्प्यापूर्वात् श्रुतमेव[16] बलवत्तरम् इति न्यायेन अर्थापत्तेः श्रुतेश्वरेणोपक्षयात् नापूर्वकल्पनावकाशः[17] इति दर्शितम् ॥

इति प्रकाशात्मयतिविरचिते शारीरकन्यायसंग्रहे
तृतीयाध्यायस्य तृतीयः पादः ॥

---

१. G. परिगृह्यते
२. G. परिकल्प्यते
३. M and G. ततश्चापूर्वम्
४. T and M वाक्येषु
५. G. साधनस्यान्यथा
६. G. निरपेक्षमपूर्वं पूर्वम्
७. T. and M. व्यामिश्रफलकर्म
८. M omits संप्रदान
९. G omits बाध
१०. G and T. द्वारम्
११. C. अपूर्वनैरपेक्ष्य
१२. G. साधनसव्यपेक्षादपूर्वानपेक्षादीश्वरात्
१३. M. पेक्षादपूर्वादपूर्वापेक्षादीश्वरात् फल
१४. G. प्राप्तेश्वरेऽप्यतिवृत्त
१५. G. सति श्रुतकल्प्ययोः
१६. G. श्रुतस्यैव बलवत्त्वम्
१७. M. नापूर्वकल्प्यावकाशः

# TATTVASUDDHI

OF

# JNĀNAGHANA PĀDA

EDITED BY

S. S. SURYANARAYANA SASTRI

AND

E. P. RADHAKRISHNAN

# Preface

The first five chapters of this well known but unpublished Advaita Manual appeared in parts 1 and 2 of the first volume of this journal. The current part contains chapters six to eleven. In editing this portion we have had the benefit of another Ms., cited in the footnotes as E. It is from the Oriental Manuscripts Library at Trivandrum, being a Devanagiri transcript of an original in Malayalam characters. We are grateful to the Curator, Mr. K. Sambasiva Sastri, for his kind loan of this manuscript.

The text contains thirty five chapters more, making forty six in all. It is hoped to complete the issue of the book at an early date. Further Mss. will be useful in settling doubtful and disputed readings.

## परमाणुवादनिराकरणं षष्ठम्

अनाद्यविद्यापटनेत्रबन्धना
यमाहुरेके परमाणुविग्रहम् ।
त्रयीशिरो[1]वारिधिसम्भवामृतं
नमामि तं कृष्णमनन्तचित्सुखम् ॥

सम्प्रति विचार्यते किं जगत् द्व्यणुकादिक्रमेण परमाणुभिरारब्धं उत ब्रह्माविद्याविवर्त[2]मिति । इह खलु तार्किका मन्यन्ते—[3]पटादिकार्यद्रव्यारम्भकस्य अनेकत्वदर्शनात् मूलकारणेऽपि तद[4]नुमातुं युक्तम् । [5]तनुभुवनादिकं चैतत्कार्य[6]म्, सावयवत्वात्, यद्यत्सावयवं तत्तत् कार्यं यथा घटादिद्रव्यम्, तथा चेदं प्रकृतम्, तस्मात् तथा इति सावयवत्वलिङ्गेन कार्यत्वं तावदध्यवसीयते । तच्चैतत् विवादपदं स्वपरिमाणादणुतरपरिमाणसंयोगसचिवसमानजातीयानेकद्रव्यारब्धम्, कार्यद्रव्यत्वात्, यदुक्तसाधनं तदुक्तसाध्यं यथा [7]घटादिद्रव्यम्, तथा चेदं त[8]नुभुवनादिकार्यद्रव्यम्, तस्मादुक्तकारणारब्धम्—[9]इति । न च वाच्यम् 'ए[10]कसुवर्णपिण्डारब्धानेकहारपारिहार्यादिषु अनैकान्तिकता हेतोः' इति; तत्रापि प्रतिकार्यं सुवर्णावयवानां अने[11]कत्वात् । एतेन क्षीरपरिणामस्य दध्नोऽनेकद्रव्यारब्धत्वं व्याख्यातम् । न च आत्मोपादानेच्छाद्वेष[12]प्रयत्नादौ अनैकान्तिकत्वं आशङ्कनीयम्, द्रव्यत्वविशेषणेन तद्व्यावृत्त्युपपत्तेः ।

१. E: गिरो
२. B: विविक्त; D: ब्रह्माविद्यया विवर्तत इति
३. A: वियदादि and D: घटादिकार्यद्रव्यारम्भस्य
४. B D: तदनुमानं
५. D: न तु भवना etc.
६. B adds भवितुमर्हति
७. E: पटादि
८. D omits तनु
९. A omits इति
१०. B: एकं
११. D: एकत्वात्
१२. A D omit द्वेष

स्यान्मतम्—य एते परमाणवो द्व्यणुकादिक्रमेण जगदारभेरन्[1] [2]ते किं सावयवाः कल्प्येरन्[3] उत निरवयवा इति[4] । सावयवत्वे तेषामपि कार्यत्वात् मूलकारणं ब्रह्म इति [5]प्रसज्येत। निरवयवत्वे परस्परं संयोगानुपपत्तेः कार्यानारम्भ-प्रसङ्गः । न च वाच्यम् 'आत्ममनसोरिव निरवयवपर[6]माणूनामपि संयोगो भवेत्' इति ; तस्याप्यसंप्रतिपन्नत्वात् । निरवयवपरमाणुसंयो[7]गाभ्युपगमेऽपि संयुक्तप्रदेशा-तिरिक्तप्रदेशान्तराभावात् प्रथि[8]मानुपपत्तेः कार्यानारम्भः तदवस्थ एव—इति ।

तदपि न मनोहरम्, विकल्पानवकाशात् । तथा हि—परमाणुशब्देन निरवयवत्वस्य कण्ठोक्तत्वात् सावयवत्वविकल्पानवकाशः । न च निरवयव[9]त्वेऽपि संयोगानुपपत्तिः, अवयविनोः निरवयवयोरपि संयोगोपलब्धेः । न च तयोरपि संयोगोऽसंप्रतिपन्न इति युक्तं व[10]क्तुम्, घटरज्जुसंयोगस्य प्रत्यक्षदृष्टत्वात्, तदपलापे च सर्वापलापप्रसङ्गात् । यदि च अवयविनोरपि स्वा[11]वयवद्वारेण संयोगो न स्वरूपेण इति [12]मतम्, तदा तदवयवानामपि स्वा[13]वयवद्वारेण तेषामपि तथैवेति निरवयवपर-[14]माणुसंयोगपुरस्सर एव सर्वाव[15]यविसंयोग इत्यायुष्मतैव भवता अङ्गीकारि । न च संयुक्त[प्रदे[16]शातिरिक्त]प्रदेशान्तराभावात् प्रथि[17]मानुपपत्तिः, अनन्यथासिद्धकार्यस्य प्रत्यक्षदृष्टत्वात् । तस्मात् निरवयवाः पर[18]माणवः संयोगसचिवाः समानजातीया द्व्यणुकादिक्रमेण भूतभौतिकलक्षणं जगदारभन्ते—इति ।

१. A: आरभन्ते
२. D adds ते while others omit ते
३. B: कुप्येरन्
४. This word, though found in all Mss., seems unnecessary.
५. A B: आसज्येत
६. B: परमात्मनां
७. D: प्रसङ्ग for संयोग
८. D: प्रथिता
९. A E: स्वेन
१०. B omits वक्तुम्
११. B: सावयव
१२. B omits मतम्
१३. A: सावयव and B omits the whole word
१४. E omits परमाणु
१५. B: अवयव
१६. E omits the part within brackets.
१७. D: प्रथिता
१८. B omits परमाणवः

अत्राभिधीयते । ब्रह्मविद्यैव अनाद्यनिर्वचनीया सती महदादि[1]कृत्स्नकार्यरूपेण विवर्तते । तथा च श्रुतिः "मायां तु प्रकृतिं विद्यान्मा[2]यिनं तु महेश्वरम्" (Śvet. 4.10) इति मायां जगत्प्रकृतिमाचष्टे । न च श्रुतिविरोधे सति अनुमानं अर्थान्तरं जगदुपादानत्वेन उपस्थापयितुमुत्सहते, स्वयं कालात्ययापदिष्टत्वात् । न च श्रुतेरन्योऽर्थः प्रतीयते[3], मायाशब्दस्य मिथ्यात्वे[4] रूढत्वात् प्रकृतिशब्दस्य उ[5]पादानकारणपर्यायत्वात् । अतोऽध्यवसीयते ब्रह्माश्रयाविद्यामायाविवर्तोऽयं [भू[6]तभौतिकलक्षणः प्रपञ्च इति ।]

यत्तूक्तम्—भूतभौतिकलक्षणं जगत् अनेकद्रव्यारब्धम्, कार्यद्र[7]व्यत्वात्, घटा[8]दिवत्—इति, तदप्यविभक्तमृत्पिण्डोपादानघटशरावोदञ्चनादिषु अनैकान्तिकम् । न च वाच्यं तत्रापि मृदव[9]यवा एव अनेकद्रव्याण्युपादानमिति, सर्वावयवानुगतै[10]कमृत्स्वभावस्य कार्यान्वयिन एव उपादानत्वोपपत्तेः । स्यादेतत्—मृदवयवसामा[11]न्यातिरिक्तमृत्स्वभावस्यानुपलम्भात्, तस्य च अनारम्भकत्वात्, [12]परिशेषात् अवयवानामेव आरम्भकत्वम्—इति । सत्यम् । सर्वावयवसाधारण एव मृत्स्वभावः; तथापि तस्यैव कार्यानुगतस्य कारणत्वं युक्तमाश्रयितुम्, अवयवानाम[13]पि अनुगतानामकारणत्वस्य संप्रतिपन्नत्वात् । तत्र कार्या[14]नुगतानां अनेकेषां कारणत्वकल्पनात् वरं तदनुगतैकस्व[15]भावस्यैव [16]कारणत्वकल्पनम्, लाघवात्, इत्यविभक्तप्रकृतिकेषु घ[17]टादिषु भवत्येवानैकान्तिकता ।

१. E: वियदादि
२. B D: विद्यादिति etc.
३. B D: प्रतिभाति
४. D: मिथ्यार्थे
५. B inserts च; A B E omit उपादान.
६. A E omit the portion within brackets.
७. E: कार्यत्वात्
८. A: घटवत्
९. D: मृदवयवानेक
१०. D omits एक
११. E: अवयवमतिरिक्त
१२. A E: पारिशेष्यात्
१३. D omits अपि
१४. A E: अननुगत
१५. D: स्वभावमात्र
१६. A: कारण, E: कारण लाघव
१७. D omits this word

यत्तु समानजा[1]तीयारब्धं कार्यमिति प्रत्यपादि, तदपि विजातीयमृदिष्टका-दार्वादिवि[2]निर्मितगृहप्रासादादिषु अनेकान्ति[3]कम्। संयोगश्च निरवयवपरमाणुषु दुःसंपादः। तथा हि, संयोगो ना[4]माव्याप्यवृत्तिः; स[5] कथं त[6]त्र भवन्नपि न भवेत्, कं वा देशमव्याप्य निष्प्रदेशे व[7]र्तेत?

यत्पुनरुक्तम्—अवयविसंयोगस्य अवयवसंयोगपुरस्सरत्वे अभ्युपगम्यमाने निरवयवपरमाणुसंयोगपुरस्सर एव सर्वोऽवयविसंयोग इत्याप[8]द्येत, अनभ्युपगम्यमाने च यथावयविनोः स्वरूपेणैव संयोगः एवं निरवयवपरमाण्वोरपि संयोगः स्यात्—इति, तदप्युक्तोत्तरमेव 'अव्याप्यवृत्तेः संयोगस्य निष्प्रदेशवस्तुधर्मत्वे सति[9] एकोपाधौ भावाभावविरोधेन मिथ्यात्वप्र[10]सङ्गात्, लोके संयोगविभागप्रतिभासस्य तन्निमित्तकार्यारम्भसिद्धेश्[11]च उष्णजलादिप्रतिभासवत् देहात्मप्रसिद्धिवच्च मायामात्रत्वेऽपि अबाधात् [12]व्यवहारोपपत्तेः '[13]न निरवयवपरमाणुतत्संयोगकल्पनावकाशः' इति। तस्मात् असङ्गतमेतत् संयोगसचिवसमानजातीयानेकपरमाणुभिः आरब्धं इति तार्किकैः परिकल्पितम्।

इति तत्त्वशुद्धौ परमाणु[14]वादनिराकरणप्रकरणम्।

१. D: जात्या
२. A D omit वि
३. D: न्तिकता
४. B omits नाम; D E: व्याप्यवृत्तिः
५. A: अथ कथं which is corrected into स कथं
६. D: तत्रैव
७. D: प्रवर्तते
८. B: अभ्युपपद्यते and न ह्युपगम्यमाने
९. E: सत्यतोपाधौ
१०. A omits प्रसङ्गात् and E लोके also
११. D: सिद्धेः सोष्ण
१२. B: अबाधाव्यवहार
१३. E omits न
१४. A E: वादि

## प्रधानकारणवादनिराकरणं सप्तमम्

यस्तर्कजालपटलप्रतिबद्धदृग्भिः[1]
क्लृप्तप्रधानपुरुषप्रविभागभेदः[2] ।
तं सर्वसर्गपरिपालनहानिलीलं
वन्दे मुकुन्दमखिलस्पृहणीयकीर्तिम् ॥

इदमिदानीं विचार्यते ' किं सांख्यसमयसिद्धं अचेतनं जगदुपादानं आहोस्वित् अखिलोपनिषत्पदकदम्बकतात्पर्यसमधिगतं[3] मायोपाधिकं ब्रह्म' इति । तत्र सांख्या मन्यन्ते—भूतभौतिकलक्षणमिदं कार्यं परमार्थभूतमचेतनं सुखदुःखमोहात्मकं च उपलभामहे । ततः तत्कारणेनापि तत्स्वभावेन भवितव्यम्, हेमरुचकादिकार्यकारणानां समानस्वभावोपलम्भात् । तथा चायं प्रयोगः [4]' विमतिपदं जगदुपादानकारणं सत्यत्वाचेतनत्वसुखदुःखमोहात्मकलक्षणस्वभावैः[5] स्वविकारेण समानस्वभावं भवितुमर्हति, उपादानकारणत्वात्, यदेवं[6] तत्तथाविधं यथा दध्याद्युपादानं क्षीरादि, तथा चेदमुपादानकारणम्,[7] तस्मात् तथाविधम्[8]' इति । ननु दृष्टान्तेऽपि कार्यकारणयोः परमार्थत्वं[9] सुखदुःखमोहात्मकत्वं च[10] असम्प्रतिपन्नम् । नैतत्सारम्, प्रत्यक्षादिप्रमाणसमधिगतत्वात्, तस्य च बाधानुपलम्भात्, तथाविधस्यैव परमार्थत्वाभिधानात् । सुखदुःखमोहात्मकत्वं[11] च नापलपनीयम्[12], एकस्यैव दध्यादिद्रव्यस्य पुरुष-

१. B: दृष्टिः ; E: दिग्भिः
२. B: क्लृप्तः and प्रविभागभेदैः
३. A E: समधिगतमायोपाधिकब्रह्मेति
४. B: विमत
५. A omits मोह ; D: मोहात्मकत्वलक्षण; E omits a few lines up to मोहात्मकत्वं चासम्प्रतिपन्नम्।
६. A: यद्यदेवं
७. B D: उपादानं
८. D: तथा इति
९. B: परमार्थकत्वं
१०. D: वा for च
११. A: आत्मत्वं
१२. E: तस्यानपलपनीयं

विशेषापेक्षया इष्टतरत्वात्[1], पुरुषान्तरं[2] प्रति अनिष्टतरत्वात्[3], अन्यं प्रति उपेक्षणीयत्वात्, तादृगात्मत्वस्यैव[4] सुखदुःखमोहात्मत्वाभिधानात्[5]। तस्मात् अनुमानसमधिगतं अचेतनं सुखदुःखमोहात्मकं परमार्थसदेवं[6] जगदुपादानम्—इति।

अत्र वयं पृच्छामः 'किमचेतनं चेतनाधिष्ठितमेव भूतभौतिकरूपेण परिणमते किं वा तदनपेक्षमेव[7]' इति। यदि तावत् प्रथमः कल्पः, तदा[8] अपेक्षार्थो वक्तव्यः किं चेतनापेक्षसत्तामात्रप्रतीतिकत्वं[9][10] आहोस्वित् तदपेक्षप्रवृत्तिकत्वं[11] इति। पूर्वस्मिन् नामान्तरेण अनिर्वचनीया अविद्यैव उक्ता स्यात्। अथ प्रवृत्तिमात्रमेव प्रधानस्य चेतनसापेक्षं[12] न स्वरूपमिति मनीषा समुन्मिषेत्, तदापि पृष्टो व्याचष्टां किं तदचेतनं प्रधानं[13] प्रवृत्तिस्वभावं उत निवृत्तिस्वभावं[14] उतोभयस्वभावं अनुभयस्वभावं वा। यदि तावत् प्रवृत्तिस्वभावं[15], तर्हि किमिति चेतनमपेक्षते? स्वयमेव प्रवर्तताम्। अथ प्रवृत्तिशक्तिमदपि[16] न चेतनानधिष्ठितं प्रवर्तत इति शङ्केथाः, तदापि वक्तव्यम् 'किं तस्य[17] चेतनसम्बन्धः चेतनव्यापारनिबन्धनः स्वव्यापारनिबन्धनो निर्निमित्तो वा?' इति। न खलु निष्क्रियस्य चेतनस्य व्यापारः संभवति। स्वव्यापारनिबन्धनत्वे[18] च[19] परस्पराश्रयत्वप्रसङ्गः[20][21]—चेतनसम्बन्धे सति स्वव्यापारः[22] स्वव्यापारे सति[23] चेतन-

१. D: इष्टत्वात्
२. B omits अन्तर
३. D: अनिष्टत्वात्
४. D: आत्मकस्य
५. D: आत्मकत्व
६. B: सदेवेदं
७. D: अनपेक्षयेति
८. D: तदपेक्षार्थो
९. B: अपेक्षितसत्ताप्रतीतिकं ; D: चेतनापेक्षसत्ताप्रतीतिकं
१०. E: प्रतीतं
११. B: तदनपेक्षप्रवृत्तिकं ; D E: तदपेक्षप्रवृत्तिकं
१२. D: सापेक्षरूपमिति मनीषा ; E omits सापेक्षं न
१३. B D omit प्रधानं
१४. D E omit निवृत्तिस्वभावं
१५. A E: प्रवृत्तिमात्रमेव स्वभावं
१६. E: प्रवृत्तिमदपि
१७. E: तर्ह्य for तस्य
१८. D: निबन्धने
१९. B omits च
२०. B: आश्रयप्रसङ्गः
२१. E: प्रसङ्गात्
२२. E omits this word
२३. A B E omit सति

सम्बन्धः—इति। निर्निमित्ते[1] च चेतनसम्बन्धे सर्वदा चेतनसम्बन्धात् अनवरतप्रवृत्तेः अनिर्मोक्षः प्रसज्येत।

अथैतद्दोषपरिजिहीर्षया तन्निवृत्तिस्वभावं परिकल्प्येत[3], तर्हीदं[2] ब्रूहि 'चेतनसम्बन्धेऽपि तन्निवृत्तिस्वभावमेव आहोस्वित् तदभावे' इति। यद्याद्यपक्षकक्षीकारः व्यर्था तर्हि चेतनसम्बन्धकल्पना। अथ चेतनसम्बन्धे निवृत्ते तन्निवृत्तिस्वभावमभ्युपगम्येत, तदा[4] किं स्वत[5] एव चेतनसम्बन्धनिवृत्तिः[6] प्रधानव्यापारनिमित्ता वा? स्वतश्चेत् सर्वदैव[7] निवृत्तेः न संसारप्रवृत्तिः[8]। न च प्रधानव्यापारनिमित्ता[9], तस्य[10] निवृत्तिस्वभावाभ्युपगमात्[11]। स्वतो निवृत्तिस्वभावत्वेऽपि चेतनसम्बन्धात् प्रवृत्तिमदपीति चेत्, तदसत्; चेतनसम्बन्धस्य स्वतः परतो वा दुर्निरूपतया उक्तोत्तरत्वात्।

स्यात् तर्हि[12] उभयस्वभावत्वमिति। तदापि[13] किं यौगपद्येन उभयस्वभावत्वं[14] उत पर्यायेण? न तावद्यौगपद्येन, परस्परव्याघातप्रसङ्गात्[15]। अथ पर्यायेण, तदापि[16] तयोः कादाचित्कत्वात् तत् निमित्तेन भवितव्यम्; निमित्तं च दुर्निरूपमित्यवोचाम। अथानुभयस्वाभावं तत्[17] इत्यभिदध्याः, तदा न संसारो न[18] मोक्षश्चेति तत्कल्पना निष्प्रयोजना[19] आयुष्मतां इत्यसङ्गतैषा सेश्वरसाङ्ख्यकल्पना।

१. B: निमित्तत्वे
२. D: अनन्तर
३. E: परिकल्प्यते
४. A: ततः; D: तदपि
५. E: स्वयमेव
६. E: चेतननिवृत्तिस्वभावः
७. B: सदैव
८. B: संसाराप्रवृत्तिः
९. E: व्यवहारनिमित्ता
१०. B: स्वतो instead of तस्य
११. D: स्वभावत्वा
१२. A: तद्व्युभय
१३. D omits अपि, E omits from तदापि to आयुष्मतामिति
१४. B D omit स्व
१५. A: व्यापार
१६. A: तथापि
१७. D: तदभिदधीथाः
१८. B omits न
१९. D: निष्प्रयोजना। तस्मादसङ्गतैषा etc.

स्यादेतत्—चेतनानधिष्ठितमेव[1] प्रधानं प्रवर्तते[2]—इति। तदपि न घटामञ्चति, चेतनाधिष्ठितस्यैव [रथ[3]शकटादेः प्रवृत्त्युपलम्भात्। अथ तत्रापि चेतनशरीरस्य[4] अचेतनस्यैव[5]] प्रवृत्तिमतो रथादिप्रवर्तकत्वं न केवलस्य चेतनस्य व्यापारः नाप्यन्य[6]-प्रवर्तकत्वं इत्यभिप्रायः, सत्यम्। न वयं चेतनव्यापारं[7] ब्रूमः, अपि तु चेतनान[8]-धिष्ठितस्य अचेतनस्य व्यापाराभावम्। तथा सति चेतनाधिष्ठितमेवाचेतनं प्रवर्तेत इत्यापद्येत। स च[9] चेतनसम्बन्धोऽचेतनस्य दुर्निरूप इति अनिर्वचनीयमायो-पाधिकं ब्रह्मैव जगदुपादानं इत्यर्थात्[10] लभ्यते। तस्मात् भूतभौतिककार्यानुमान[11]मपि कारणस्य मायामयत्व[12]मेव साधयतीति धर्मविशेषविपरीतसाधनो हेतुः। [यच्च[13] घटादेः सुखाद्यात्मत्वानुमानं[14] तत्रापि हेतुः] कालात्ययापदिष्टः, सुखादे[15]र्घटादेश्च बाह्याभ्यन्तर-भावेन भेदस्य सर्वजनप्रत्यक्षत्वात्।

अतो वेदान्तवाक्यतात्पर्यसमधिगतं ब्रह्म स्वमायावेश[16]वशेन समस्तबाह्या-ध्यात्मिकप्रपञ्चाकारेण विवर्तते इति सिद्धम्।

इति तत्त्वशुद्धौ प्रधानकारणवादनिराकरणप्रकरणम्।

१. D E: चेतनाधिष्ठित
२. A omits प्र
३. D: घट; E omits up to अचेतनस्यैव as indicated by brackets
४. D: शरीरस्यैव
५. A omits एव
६. B omits अपि
७. D: व्यापारमिह
८. A B: चेतनाधिष्ठितस्याचेतनस्य
९. D omits च
१०. D: इत्येतल्लभ्यते
११. E: कार्यस्थानमपि
१२. D: समवायित्वमेव
१३. A E omit the portion within brackets
१४. D: त्वाभिधानं
१५. B: सुखासुखादेर्घटादेश्च ; D omits च
१६. A: मायावेशेन

## कार्यत्वनिराकरणं अष्टमम्

यत्प्राप्तये विधिमवोचदनन्यशक्त्या
यद्वत्[1]तथैव परिनिष्ठितमप्यथाह ।
तत्त्वं निरस्तपरिमाणमियं श्रुतिर्यत्
तस्मै नमो भगवते मधुविद्विषेऽस्तु ॥

अथेदानीं विचार्यते 'किं [2]कार्यान्विते शब्दशक्तिः आहोस्वित् योग्येतरान्विते' इति । अत्र प्राभाकरा मन्यन्ते कार्यान्विते शब्दशक्तिः इति । तथा हि— 'देवदत्त गामभ्याज[3] शुक्लां दण्डेन' इति शब्दश्रवणसमनन्तरं प्रतिपत्तुः प्रवृत्तिमुपलभ्य तस्य गवादिविषयप्रवर्तकविज्ञानमासीदिति बालोऽनुमिमीते । तथा च विवादगोचरापन्ना प्रवृत्तिः प्रवर्तकज्ञानपूर्विका, प्रवृत्तित्वात्, अस्मत्प्रवृत्तिवत्, इति । तच्च कार्यज्ञानं भवितुमर्हति, [[4]प्रवर्तकज्ञानत्वात्, अस्मत्प्रवर्तकज्ञानवदिति] कार्यगोचरतामेव तस्य प्रतिपद्यते । स्वव्यापारस्य कार्यज्ञानपूर्वकत्वव्याप्तेः तस्य च शब्दश्रवणसमनन्तरभावित्वात् अनन्यथासिद्धान्वयव्यतिरेकाभ्यां शब्द एवास्य [5]कार्यविज्ञानमजीजनदित्यध्यवस्यति । स पुनरेवं पदकदम्बकस्य प्रथमं [6]कार्यविज्ञानमात्रे सामर्थ्यं प्रतिपद्य प्रयोगान्तरेषु 'गां बधान, तुरगमानय' इत्यादिषु पदान्तर-प्रक्षेपोद्धारयोः तदर्थस्य कार्यान्वितस्यैव प्रक्षेपोद्धारदर्शनात् अन्यथा [7]चादर्शनात् शब्दशक्तिप्रतियोगित्वेन प्रथमावगत[8]कार्यस्य सर्वप्रयोगेषु चाव्यभिचारिणोऽपरित्यागात् तदन्वितस्वार्थे गवादिपदसामर्थ्यं प्रतिपद्यते ।

१. A E: तद्वत्
२. A E omit this word.
३. B: आनय
४. A E omit the words within brackets, but read instead प्रवर्तकज्ञानवत्
५. B omits कार्य
६. B: प्रथमकार्य
७. B omits च
८. B: कार्यत्व

स्यादेतत्—[1]कार्याभिधायिपदानां तदन्विताभिधायित्वाभावात् अनन्वितस्वरूपानभिधायित्वाच्च योग्येतरान्विते सामर्थ्यमिति वक्तव्यम् । ततश्च सकलपदानां स एव न्यायः [2]समाश्रयणीयः । न ह्यर्धजरतीन्यायेन प्रयोजकभेदकल्पना युक्ता । न च वाच्यं धात्वर्थस्यापि कृतियोग्यतया कार्यत्वात् लिङादिपदानामपि तदन्विताभिधायित्वेन सर्वं समञ्जसं इति ; धात्वर्थस्य कार्यत्वे सति लिङादिपदानां तदन्वितार्थाभिधायित्वं लिङादिपदार्थान्वये [3]च धात्वर्थस्य कार्यत्वं इति इतरेतराश्रयत्वप्रसङ्गात्—इति ।

तदपि न मनोहरम् , सकलपदानां कार्यार्थ एव प्रथमं सम्बन्धग्रहणात् । गवादेरपि कार्यान्वितरूपेण कार्यत्वावापोद्धारयोरपि तदपरित्यागात् गवादिस्वरूपेषु पदानां स्मृतिमात्रव्यापारात् कार्यमेव हि सर्वपदशक्तिप्रतियोगीति[4] न प्रयोज[5]कभेदः । न च सर्वपदानां कार्याभिधायित्वे सति तस्यैकेन पदेनापि सिद्धत्वात् पदान्तरवैयर्थ्यं इत्याशङ्कनीयम् , गवादिस्वरूपान्वितकार्यरूपाणां अनेकत्वेन सर्वपदानां प्रवृत्तिनिमित्तभेदोपपत्तेः । तस्मात् कार्यान्विते सकलपदसामर्थ्यमिति ।

अत्र समाधिरभिधीयते । भवतु नाम कार्यवाक्ये सम्बन्धग्रहः; तथापि न कार्यान्वित एव सकल[6]शब्दशक्तिरिति नियन्तुं [7]शक्यते, सकलपदानां अन्वित[8]स्वार्थाभिधायित्वात् , अन्वयस्य च योग्यतानिमित्तत्वात् , योग्यतायाश्च द्रव्यगुणयोः क्रियाकारकयोः धात्वर्थकार्ययोरिति लोके विभागेनैव क्लृप्तत्वात् , तदनुसारेण गुणवाचिनां द्रव्यान्विताभिधायित्वं द्रव्यवाचिनां क्रियान्विताभिधायित्वं क्रियावाचिनां कार्यान्विताभिधायित्वं इति युक्तं प्रतिपत्तुम् । अन्यथा सकलपदानामपि

१. E omits **कार्याभिधायिपदानां तदन्विताभिधायित्वा**

२. B omits **सं**

३. A: **एव** instead of **च**

४. E omits **इति**

५. B: **प्रयोज्यप्रयोजकभेदः** ; E: **प्रयोजनभेदः**

६. E omits **शब्द**

७. A E: **सा शक्यते**

८. B omits **स्वार्थ**

कार्यान्विताभिधायित्वे सति अङ्गुल्यग्रादिवाक्यस्थपदानां इव अयोग्यान्वयनिष्ठत्वात्[1] प्रमाणान्तरविरोधो दुष्परिहरः प्रसज्येत। अथायमभिप्रायः 'कार्यान्वये सर्वेषां शब्दसमधिगतेऽपि गुणद्रव्यादीनां पार्ष्ठिकः परस्परान्वयो भवन् न निवार्यते, कुतस्तत्र प्रमाणान्तरविरोधः ?' इति, तदपि न शोभां बिभर्ति। न हि परस्परं अयोग्यान्वयः शब्दसमधिगतो योग्यान्वयस्तु पदानां आर्थिक इति शब्दप्रमाणवादिनां अयं शोशुभीति।

स्यादेतत्—शेषशेषिभावेन[3] सर्वपदार्थानां[2] कार्येणापि संसर्गयोग्यता दरीदृश्यते; कथं अयोग्यार्थसम्बन्धः शब्दसमधिगतः ?—इति। किमिदं शेषशेषित्वम् ? यदि साध्यसाधनभावः, सोऽपि साक्षात् परम्परया वा ? न तावत् धात्वर्थेनैव[4] गुणद्रव्यादिभिरपि साक्षादेव कार्यस्य साध्यत्वं उपपनीपद्यते, भावार्थैकविषयत्वात् कार्यस्य। अथ परम्परया साध्यत्वं इति शङ्केथाः, तर्हि फलस्यैव परमसाध्यत्वात् तदेव शेषि भवतु किमनेनान्तर्गडुना कार्येण ? अथ मतं—कार्यस्यैव शेषित्वं शब्दसमधिगतं, सर्वपदानां कार्यप्रधानतया अन्विताभिधायित्वात्, फलस्य तु प्राधान्यं पुरुषापेक्षं आर्थिकम्—इति, तदपि न घटामुपैति, सर्वपदानां कार्यप्रधानतया अन्विताभिधायित्वे सति कार्यस्य शब्दतः शेषित्वं, तस्यैव शेषित्वे सकलपदानां तत्प्रधानतया अन्विताभिधायित्वं इति परस्पराश्रयदोषमूषिकाभक्षि[5]तेयमुत्प्रेक्षा समीक्ष्यते। तस्मात् विधिनिष्ठवाक्येषु[6] पदानां ऐदम्पर्यवशेन कार्यान्विताभिधायित्वे[7]ऽपि विधिरहितवाक्यस्थपदानां योग्यतावशेन परस्परान्विताभिधायित्वे न कश्चिद्विरोधः।

१. A: अयोग्यत्वान्वय

२. A: पदार्थानां

३. E: भावे

४. B and E read धात्वर्थैनैव; this is manifestly incorrect; A gives the correct reading, but it has been tampered with erroneously.

५. E omits भक्षित which is indicated by a gap in it.

६. A: वाक्यस्थेषु

७. A: धायित्वं

यत्तूक्तम्—प्रवृत्तिलिङ्गेन प्रवर्तकविज्ञानानुमानात् तस्य च शब्दान्वयव्यतिरेकानुविधायितया प्रथमं कार्यस्यैव सकलशब्द[1]शक्तिप्रतियोगित्वावगमात् प्रयोगान्तरेषु च व्यभिचाराभावात् तत्रैव सकलपदसामर्थ्यम्—इति, तदपि न विवेकिजनमनोऽनुकूलम् । प्रथमप्रयोगे तु प्रवर्तकविज्ञानानुमानं [ग[2]वादिपदानां अन्यत्र सामर्थ्याभावकृतं न भवति ; किं तु] गवादिस्वरूपविज्ञानस्य तदा शब्दजन्यत्वावगमोपायाभावात् । प्रयोगान्तरेषु गवादिपदानामपि प्रक्षेपोद्धाराभ्यां प्रत्येकं योग्येतरान्वितगवादिस्वरूपेऽपि सामर्थ्यं प्रतिप[3]द्यते ।

यत्तु प्रयोगान्तरेष्वपि कार्यस्य अव्यभिचार इति, तत् सर्वत्र कार्याभिधायिपदप्रयोगनिमित्तम् ; कार्याभिधायिपदप्रयोगश्च श्रोतुः प्रवृत्तिसिद्ध[4]ये इति । [त[5]स्मात् प्रवर्तकवाक्ये सकलपदसम्बन्धग्रहणेऽपि योग्येतरान्विते शब्दशक्तिः इत्यन्वयव्यतिरेकाभ्यां अध्यवस्यामः इति ।]

इति तत्त्वशुद्धौ कार्यत्वनिराकरणप्रकरणम् ।

१. A E omit शब्द
२. E omits the portion within brackets; but the word "anyatra" is explained in the Commentary; there are no doubt syntactical difficulties in a statement like "sāmarthyābhāva-kṛtam na bhavati, kim tu upāyābhāvāt."
३. A: प्रतिपाद्यते
४. A: सिद्ध इति
५. E omits the part within brackets.

## व्युत्पत्तिनिरूपणं नवमम्

यन्मायाविष्टरूपं विविधविधिविधेयादिभेदावभासं
लोके हानादिलिङ्गैर्विधियुतवचसां[1] गृह्यते वाच्यरूपम् ।
तद्वद्[2]वक्त्रप्रसादप्रभृतिबहुविधालिङ्गतस्सिद्धरूपं
वाच्यं नाम्नामनन्यप्रभमजममृतं ब्रह्म तन्नौमि शुद्धम् ॥

सम्प्रति विचार्यते—किं प्रवर्तकद्वारमेव सकलपदसम्बन्धग्रहणं आहोस्वित् तदनपेक्षमपि—इति। इह खलु शब्दश्रवणसमनन्तरं प्रतिपत्तुः प्रवृत्तिमुपलभ्य प्रवर्तकविज्ञानमनुमाय तत्रैव शब्दस्य सम्बन्धग्रहणात्, प्रयोगान्तरेषु च पदानां आवापोद्धारसमयेऽपि स्वार्थेषु प्रतिपदं सामर्थ्यग्रहणस्यापि प्रवर्तकविज्ञानपूर्वकत्वात्, क्वचिच्च प्रवर्तकवाक्ये गृहीतसम्बन्धपदान्तरसमभिव्याहारनिमित्तत्वात् प्रवर्तकद्वारमेव सकल[3]पदसम्बन्धग्रहणम्। स्यान्मतम्—'पुत्रस्ते जातः' इत्यादिपदकदम्बक[श्र[4]वण-समनन्तरं प्रतिपत्तुः प्रवर्तकविज्ञानावगममन्तरेणापि समुत्फुल्लवदनविकसितकपोल-भ्रूवि[5]लासादिलिङ्गेन तस्य हर्षहे[6]तुविज्ञानमात्रमनुमाय हर्षहेतुविशेषगवेषणायां] पुत्र-जन्मनिमित्तविशिष्टोत्सवलिङ्गेन वा[7] पुत्रजन्मसाक्षात्करणेन वा नू[8]नमनेन शब्देन हर्ष-हेतुरयमेव [[9]बोधित इति प्रथमं पुत्रजन्ममात्रविज्ञाने पदानामविशेषेण सामर्थ्यं प्रतिपद्य, पुनरावापोद्धारेण वा प्रसिद्धपदसमभिव्याहारेण वा प्रतिपदसम्बन्धग्रहण-संभवात् न प्रवर्तकद्वारमेव] सकलपदसम्बन्धग्रहणम्—इति। तदपि न घटमानप-

१. A E: वचसा ; but the commentary supports वचसाम्.
२. E: तत्तद्व
३. B: समस्त
४. E omits the portion within brackets.
५. B: विकास
६. A: हेतुमात्रविज्ञान
७. B omits this वा
८. A wrongly reads अनुमानेन
९. E omits the part within the brackets.

द्युतिमध्यास्ते, हर्षहेतूनां आनन्त्यसंभवात्। तथा हि—पुत्रजन्मनिमित्तको[1] वा [सुखप्रसवनिमित्तको वा][2] तदैव समीहितवस्त्वन्तरस्मृतिनिमित्तो वा हर्ष[3] उत्पद्यते। ततश्च भ्रूविलासादिलिङ्गस्य हर्षहेतुमात्रविज्ञानविषयत्वात्[4] तस्य च आनन्त्यात् अयमेव अनेन शब्देन बोधित इति नियमोपायाभावात् तत्रापि प्रवर्तकद्वार[5] एव सम्बन्धग्रहः। न च पुत्रजन्मसाक्षात्कारेण वा तदसाधारणलिङ्गेन वा पुत्रजन्मनिश्चयेऽपि शब्दस्य तद्विषयत्वकल्पना अवकल्पते, शब्दश्रवणसमनन्तरभाविमुखविकासादेः हर्षहेत्वन्तरविज्ञाननिमित्ततयापि संभवेन अनैकान्तिकत्वात्। अथापि[6] कथञ्चित् पारिशेष्यसंभवेन भवेत्तत्र[7] सम्बन्धग्रहः, तथापि प्रवर्तक एव आद्यव्युत्पत्तिमन्तरेण नायमपि संभवेत्। तस्मात् प्रवर्तकद्वार एव सकलपदसम्बन्धग्रह इति मीमांसका मन्यन्ते।

अत्राभिधीयते। न खलु निखिलपदसामर्थ्यग्रहणं प्रवर्तकद्वारमेव[8] इति नियन्तुं शक्यम्, पुत्रजन्मादिवाक्येषु प्रवर्तकमन्तरेणापि सम्बन्धग्रहणदर्शनात्। न च वाच्यं हर्षहेतूनां आनन्त्यात् नियतार्थोपादानानुपपत्त्या[9] सम्बन्धग्रहणासंभव[10] इति। मुखविकासादिसमनन्तरमेव पुत्रजन्मसाक्षात्कारेण तदसाधारणलिङ्गेन वा पुत्रजन्मनिश्चयात्। साधारणतया[11] अवगतस्य हर्षहेतुविज्ञानस्य तत्र पर्यवसानसंभवे सति अप्रतिपन्नहर्षहेत्वन्तरविषयत्वाशङ्का[12]नुपपत्तेः। यत्तु पुत्रजन्मसमयसमधिगतं सुखप्रसवादि तत् पुत्रजन्महर्षनान्तरीयकत्वात् न प्रथमेतरप्रतीत[13]पुत्रजन्महर्षेण विकल्प्यते। यदि पुनरेवमतिशङ्कया लिङ्गस्य अनेकार्थसाधारण्यात् अनियता[14] लिङ्गिनि प्रतिपत्तिरुत्प्रेक्ष्येत, तदा गवानयनादि[15]शब्दश्रवणसमनन्तरमपि श्रोतुः आनुषङ्गिकानेकव्या-

१. A: निमित्तो
२. A: निमित्तो; E omits the part within brackets.
३. A E: हर्षहेतुरुपपद्यते
४. B: हेतुविज्ञानमात्र
५. A gives द्वारेण as an alternative reading.
६. A: तथापि
७. B omits भवेत्
८. E omits एव
९. B: अनुपपत्तेः
१०. A: ग्रहासंभव
११. B: साधारणावगतस्य
१२. B: त्वशङ्का
१३. E: प्रथमं तत्प्रतीत
१४. B: अनिश्चयतया
१५. E omits आदि

पारसंभवात् अनेकप्रवर्तकविज्ञानानुमानसंभवे सति अनिर्धारणं समानमेव तवापि स्यात्। अथ प्रयोगान्तरेषु तेषामेव पदानां आवापोद्धारदर्शनात् अर्थनियमः कल्प्येत[1], तर्हि पुत्रजन्मवाक्यस्थपदानामपि प्रयोगान्तरगतावापोद्धारवशात् पारिशेष्यसिद्धिरिति समानश्चर्चः।

यद्पीदमवादि—जातस्य जन्तोः प्रथमतरशब्दार्थसम्बन्धग्रहणस्य[2] प्रवर्तकज्ञानव्यतिरेकेण असंभावात् कतिपयशब्दानां प्रवर्तकद्वारेणैव गृहीतसम्बन्धानां अन्यत्र पुत्रजन्मादिवाक्येषु च सम्बन्धग्रहणोपायत्वम्—इति, तदपि यथाजातमनोपच्छन्दनमात्रम्; यतः [प्रथम[3]तरसम्बन्धग्रहोऽपि इदंतदादिसिद्धवस्तुविज्ञानपूर्वक एव। यदि पुनः इदंतदादिशब्दार्थविज्ञानमपि] प्रथमतरसम्बन्धग्रहणकारणं नाङ्गीकुर्वी[4]महि, तदा सविकल्पकविज्ञानपूर्वक[5]विभागव्यवहाराभावात् शब्दार्थसम्बन्धग्रहो न भवेत्। अथ प्रवर्तक एव व्युत्पन्नजन्मान्तरीयेदंतदादिशब्दानां एत[6]ज्जन्मनि विनापि सम्बन्धग्रहणं अदृष्टवशेन अनुस्मर्यमाणसम्बन्धानां आद्यव्युत्पत्तिहेतुत्वं इति मन्वीथाः, नैतत्सारम्। यथैतज्जन्मनि तावत् इदंतदादिसिद्धवस्तुविज्ञानपूर्वक एव [श[7]ब्दार्थसम्बन्धग्रहः तथा जन्मान्तरेऽपि इति सर्वत्र प्रथमतरशब्दार्थसम्बन्धग्रहसिद्धवस्तुज्ञानपूर्वक] एवेति भवताप्यायुष्मता अङ्गयकारि। तस्मात् अस्मत्पक्षे ह[8]र्षहेतूनां आनन्त्यसंभव इव भवत्पक्षेऽपि प्रवर्तकानन्त्यसंभवात् प्रवर्त्यविषयसाक्षात्कारेण वा तदसाधारणलिङ्गेन वा पदान्तरप्रक्षेपोद्धाराभ्यां वा[10] पारिशेष्यकल्पनायां अस्मत्पक्षेऽपि [11]तत्संभवात् न प्रवर्तकद्वार एव सकलपदसम्बन्धग्रह इति सन्तोष्टव्यम्।

इति तत्त्वशुद्धौ व्युत्पत्तिनिरूपणप्रकरणम्।

१. B: कल्प्यते
२. A E: शब्दसम्बन्धज्ञानस्य
३. E omits the portion within brackets.
४. E: नाङ्गीकुर्वन्ति
५. B adds पूर्वक after विभाग also.
६. B: एकजन्मनि, an obvious mistake.
७. B omits the portion within brackets, while E omits शब्दार्थ
८. E omits हर्ष
९. A E omit from पक्षे to संभवात्
१०. A omits वा
११. B wrongly reads असंभवात्

## प्रवर्तकनिरूपणं दशमम्

अन्तरात्मवपुषाखिलं[1] जगत्
प्रेरयन्नथ बहिश्च यः पुमान् ।
इष्टसाधनवपुः प्रवर्तक-
स्तं नमामि मुरवैरिणं सदा ॥

सम्प्रति विचार्यते किं कार्यज्ञानं प्रवर्तकं आहोस्वित् इष्टसाधनविज्ञानं इति । लोके कार्यमिति विज्ञानसमनन्तरमेव प्रवृत्तिदर्शनात् अन्यथा चादर्शनात् कार्यविज्ञानस्य[3] तावत् प्रवर्तकत्वं सिद्धम् । याविमौ इष्टसाधनविज्ञानेन[4] प्रवृत्तेरन्वयव्यतिरेकौ तौ[5] प्रवृत्तिं प्रति कारणभूतकार्यविज्ञानहेतुविषयतया अन्यथासिद्धौ । तथा हि—' इदं इष्टसाधनम् ' इतिविज्ञानेन तस्य कृतियोग्यतां उपलभ्य पुरुषः प्रवर्तते ; निवर्तते च ' अनिष्टसाधनम् ' इतिविज्ञानेन । तस्मात् प्रवृत्तिकारणविषयतया अन्यथासिद्धौ इष्टसाधनविज्ञानेन प्रवृत्तेः अन्वयव्यतिरेकौ । अपि च इष्टसाधनविज्ञानेन[6] प्रवृत्तेः अन्वयव्यतिरेकौ असिद्धौ, अतीतानागतेष्टसाधनविज्ञाने सत्यपि प्रवृत्त्यनुदयदर्शनात् । न च वाच्यं अतीतादिकार्यविज्ञानेऽपि प्रवृत्त्यभावः तुल्य इति, कार्यस्य कार्यत्वादेव अतीतादिरूपेण प्रतीतिगोचरतानुपपत्तेः[7] । साधनं[8] पुनः अतीतादिरूपेणापि प्रतीतिपथमवतरति, तस्य कार्यैकरूपतानभ्युपगमात्[9] । यदपि पुनः तस्यापि साध्यैकरूपता अभ्युपगम्येत, तर्हि नामान्तरेण अस्मदीयं कार्यमेव अभ्यधायि भवता । तस्मात् ' निधिमानेष भूभागः, प्रतिरोधकवानध्वा ' इत्यादीष्टानिष्टसाधनविज्ञान-

१. B: वपुषो
२. B; विज्ञानमेवेति
३. E; विज्ञानं
४. E: इष्टसाध······प्रवृत्तेरन्वय etc., omitting a few letters
५. B omits this
६. A omits साधन
७. A: गोचरानुपपत्तेः
८. B: इष्टसाधनता पुनः
९. A gives अङ्गयकारि as an alternative reading

समनन्तरमेवोपलभ्यमाने च प्रवृत्तिनिवृत्ती कार्यमितिविज्ञानव्यवधानेनैव उदयमधिरोहतः[1] ।

स्यान्मतम्—साध्यैकरूपमेव भवदभिप्रेतं कार्यं प्रवृत्तिहेतुः, इष्टसाधनं पुनः प्रवृत्तिकारणभावं प्रतिपद्यमानं न[2] साध्यस्वभावमपि स्वयं फलं प्रति साधनभावेनैव प्रवर्तयतीति न कार्यपक्षकक्षीकारप्रसङ्गः अस्माकम्—इति । तदप्यचारु ; साधनभावे सत्यपि अतीतादि[3]स्वरूपस्य साधनस्य अप्रवर्तकत्वात्, साध्यस्वभावस्य साधनत्वाभावेन अप्रवर्तकत्वादर्शनात्, अन्वयव्यतिरेकाभ्यां साध्यस्वभावस्यैव प्रवर्तकत्वं इति भवतां अनिच्छताम्[4]प्याश्रयणीयम् । तस्मात् कार्यविज्ञानमेव प्रवर्तकं इति प्राभाकराः प्रतिपेदिरे ।

अत्रेदमाचक्ष्महे । समीहितसाधनविज्ञानमेव प्रवर्तकम्, तेन प्रवृत्तेः अन्वयव्यतिरेकोपलम्भात् । न च 'तौ कार्यविज्ञानहेतुविषयतया अन्यथासिद्धौ' इत्याशङ्क्नीयम्[5], 'कार्यम्' इतिविज्ञानस्य प्रवर्तकत्वासिद्धेः । न च वाच्यम् 'कार्यविज्ञानान्वयव्यतिरेकानुविधायित्वात् प्रवृत्तेः कार्यज्ञानस्यैव[6] प्रवर्तकत्वम्' इति । इष्टसाधनव्यतिरेकेण कार्यसद्भावे[7] प्रमाणाभावात्, तस्य च उभयवादिसंप्रतिपन्नतया प्रवृत्त्यन्वयव्यतिरेकवत्त्वात् तदेव प्रवर्तकं युक्तमाश्रयितुम् ।

अथ मतम् 'अतीतानागतेष्टसाधनविज्ञानस्य[8] अप्रवर्तकत्वात् साधनत्वविज्ञानं प्रवृत्तेरकारणम्, अतः साध्यरूपेणैव तस्यापि प्रवर्तकत्वं वक्तव्यम् ; तथा च सति नामान्तरेण कार्यमेव प्रवर्तकमुक्तं स्यात्, तत्र कथमिष्टसाधनव्यतिरिक्तकार्याभावः ?' इति । तत्र[9] वदामः । भवत्पक्षेऽपि इष्टसाधनबुद्धिः स्वयमप्रवर्तिकापि[10] प्रवृत्ति-[11]

१. A: अधिरोहति
२. A E omit न
३. A: अप्रतीतादि
४. B omits अनिच्छतां
५. A E: शङ्कनीयम्
६. A omits एव
७. E: संभवे
८. E: साधनविषयविज्ञानस्य
९. B: अत्र
१०. E: स्वयमप्रवृत्तिहेतुभूत, thus omitting a few letters
११. B: प्रवर्तिते कार्यज्ञानहेतुरिष्यते

हेतुभूतकार्यज्ञानहेतुः इष्यते । साधनं तावत् अतीतादिरूपेण कार्यज्ञानं प्रत्यपि न कारणभावं प्रतिपद्यते । तत:[1] कृतियोग्येष्टसाधनज्ञानं कार्यज्ञानकारणं इति वक्तव्यम्। तथा च सति येनात्मना इष्टसाधनविज्ञानस्य कार्यज्ञानं प्रति कारणभावः तेनात्मनैव प्रवृत्तिं प्रति हेतुरस्तु[2], तस्य उभयवादिसम्प्रतिपन्नत्वात्, प्रवृत्त्यव्यभिचाराच्च ; किमनेन अजागलस्तनायमानेन कार्यनामधेयेन ? तस्मात् इष्टसाधनविज्ञानमेव सर्वत्र प्रवर्तकं इति साम्प्रतम् ।

इति तत्त्वशुद्धौ प्रवर्तकनिरूपणप्रकरणम् ।

१. A: अत.    २. A omits अस्तु

## अन्विताभिधानप्रकरणं एकादशम्

संसृष्टार्थे जगति निखिलस्याभिधानस्य शक्तिं
दृष्ट्वा यस्मिन् [1]निखिलजगतामीश्वरे [2]तद्वदेव ।
स्वच्छानन्दे परमपुरुषे वैदिकीनां च वाचां
ज्ञाता वृत्ति[3]स्तमहमभयं नौमि विष्णुं वरेण्यम् ॥

इदमिदानीमालोच्यते किं अभिहिता[4]नामेवार्थानां अन्योन्यसंसर्गबोधकत्वं आहोस्वित् पदानामेव अन्वितार्थाभिधायित्वं [5]इति ।

इह खलु वार्तिककारीया मन्यन्ते—'देवदत्त शुक्लां दण्डेन गामानय' इति शब्दश्रवणसमनन्तरं बालस्य प्रतिपत्तुः प्रवृत्तिलिङ्गेन पदकदम्बकस्य अविशेषेण वाक्यार्थे सामर्थ्यं प्रथमं प्रतिपद्य पुनश्च 'गां चारय, तुरगमानय' इत्यादिप्रयोगान्तरेषु गोपदोद्धारेण सास्नादिमदर्थमात्रोद्धारोपलम्भात्, तुरगपदप्रक्षेपे च केसरादिमदर्थमात्रप्रक्षेपदर्शनात्, गवादिपदानां गवादिस्वरूपमात्रे सामर्थ्यं प्रतिपद्यते। कथं पुनः शब्दश्रवणसमनन्तरमेव संसर्गबुद्धिः ?—इति । संसर्गबुद्धिकारणमवीक्षमाणः पदानां पदार्थस्वरूपमात्रविज्ञानोपक्षीणशक्तित्वात् संसर्गविषयप्रमाणान्तरानवगमाच्च पदाभिहितपदार्थानां एव संसर्गविज्ञानान्वयव्यतिरेकवतां तद्धेतुत्वं इति पश्चात् निश्चिनोति ।

स्यादेतत्—पदानां पदार्थस्वरूपाभिधानसामर्थ्यं पदार्थानां च संसर्गप्रतिपादनसामर्थ्यं पदार्थेषु संसर्गप्रतिपादनशक्त्याधानसामर्थ्यं च पदानामिति गुरुतरकल्पना अभिहितान्वयवादे प्रसज्येत । अन्विताभिधानवादे तु पदानामेव संसृष्टा-

१. B: अखिल
२. A: तावदेव
३. B: वृत्तिं
४. A E omit एवार्थानां
५. B: इत्यादि

र्थाभिधानसामर्थ्यमिति लघीयसी[1] कल्पना। न च एकशक्तिकल्पनया वाक्यार्थ-विज्ञानोपपत्तौ अनेकशक्तिकल्पना [प्रमाणप्रयोजनवती[2]—इति। तदपि न समञ्जसम्, अन्विताभिधानपक्ष एव गुरुतरकल्पनाश्रयणात्[4]। तथा हि—पदानां तावत् पदार्थस्वरूपस्मृतिजननसामर्थ्यं परिकल्पनीयम्[5], पुनस्तेषां अन्वितार्थाभिधान-सामर्थ्यं[6] च इत्यस्त्येवानेकशक्तिकल्पना।][3] अस्मत्पक्षे तु पदानां पदार्थाभिधान-सामर्थ्यमेकमेव कल्पनीयम्। पदार्थानां पुनः पदसमूहसन्निधापितानां आकाङ्क्षा-सन्निधियोग्यताविशिष्टानां अर्थाधिगतं अन्योन्यसंसर्गबोधनसामर्थ्यं अन्यत्र दृष्टमेवा-श्रीयते[7]। न खलु पदार्थेषु संसर्गबोधनसामर्थ्यं इदंप्रथमतया अत्रैव परिकल्प्यते[8]। उक्तं हि[9]—

" पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः॥ " इति।

न चैवं मन्तव्यम् 'पदानामेव संसर्गप्रतिपादनसामर्थ्यानभ्युपगमे संसर्गज्ञानस्य अशाब्दत्वप्रसङ्गः, ततश्चा[?]ौ न वाक्यार्थः स्यात्' इति। पदानां पदार्थाभिधान-व्यापारनान्तरीयकत्वात् पदार्थानां अन्योन्यसंसर्गबोधनं[10] स्यात्।

[[11]अपि चेदं वक्तव्यम् 'किं पदानि सामान्यान्विताभिधायीनि[12] किं वा विशे-षान्विताभिधायीनि?' इति। न तावदाद्यः कल्पः, विशिष्टवाक्यार्थप्रतीत्यभाव-

१. A E: लघ्वी
२. E omits a few words. It reads या वाक्यार्थ etc.
३. A gives an alternative reading for the portion within brackets:
कल्पनावकाश इति। अत्राभिधीयते। युष्मत्पक्ष एव कल्पनागौरवं पदानां पदार्थे संसर्गे च शक्तिकल्पना। अस्मत्पक्षे तु etc.
४. A: श्रवणात्
५. B: कल्प्यनीयं
६. B omits अर्थ
७. A: आश्रीयेत
८. B omits परि
९. Ślokavārtika p. 947 (Chowkhambha)
१०. E: संबोधनं
११. E omits the part within square brackets.
१२. A: अन्वयाभि

प्रसङ्गात्। न च वाच्यम् 'शब्दतः[1] सामान्यान्वयप्रतीतावपि सामान्यस्य विशेषपर्यवसायित्वात्] विशेषाणां[2] च आकाङ्क्षासन्निधियोग्यतावशेन नियामकत्वोपपत्तेः विशिष्टवाक्यार्थप्रतीतिलाभः' इति। विशेषाणां आकाङ्क्षादिमत्त्वेऽपि शब्दस्य सामान्यान्वयबोधकतया विशेषान्वयबोधकत्वाभावात्, पदार्थानां च भवद्भिः परस्परान्वयबोधकत्वानभ्युपगमात्[3]। नापि द्वितीयः, विशेषाणां आनन्त्यात् प्रतिप्रयोगं[4] प्रतिपदार्थं च शब्दस्य शक्तिभेदकल्पनानुपपत्तेः सम्बन्धग्रहणे[5] एवायुषः क्षयात् शब्दार्थे कश्चित् व्यवहारो न स्यात्। तस्मात् अनन्यथासिद्धवाक्यार्थप्रतिपत्त्यन्यथानुपपत्त्यैव[6] अभिहितान्वयनिश्चयं[7] इति।

अत्र प्रतिविधीयते। पदानामेव संसृष्टार्थप्रतिपादनसामर्थ्यं आश्रयणीयम्, गवादिपदानां अन्यान्वितगवादिस्वरूपे सङ्गतिग्रहणात्। तथा हि—'गामानय दण्डेन' इति शब्दविज्ञानसमनन्तरभाविप्रवृत्तिलिङ्गेन शब्दसमुदायस्य अर्थसमुदाये सामर्थ्यं प्रतिपद्य [पुनः[8] प्रयोगान्तरेषु पदोद्धारे] तदर्थस्य इतरान्वयेन सार्धमेवोद्धारात् पदान्तरप्रक्षेपे च तदर्थस्य अन्यान्वितस्यैव[10][11] प्रक्षेपात् पदानां अन्योन्यान्वितस्वार्थे सामर्थ्यं[9] व्युत्पत्त्या प्रतिपद्यते। न च अन्वितपदार्थविज्ञानेन शब्दस्य अन्वयव्यतिरेकवत्त्वे सत्यपि अनन्वितगवादिस्वरूपमात्रे शब्दशक्तिकल्पना [प्रमाणप्रयोजनवती[12]। अनेक]शक्तिकल्पना पुनः अभिहितान्वयवादे दुष्परिहरा।

१. A: शब्दस्य
२. B: विशेषणानां
३. A: अभ्युपगमात्
४. A: प्रतियोगं
५. B: ग्रह एवायुःक्षयात् शब्दार्थे
६. E omits a few lines: अन्यथा ……गामानय etc.; the same omission is made in A, but corrected.
७. B omits निश्चय
८. B omits the portion within brackets
९. A: सामर्थ्यमेव
१०. B omits अन्य
११. A omits एव
१२. B corrupts this into प्रमाणं प्रयोजनयति while E omits the portion within brackets.

ननूक्तं आकाङ्क्षासन्निधियोग्यताविशिष्टार्थगतसंसर्गप्रतिपादनसामर्थ्यं अन्यत्र दृष्टमेव आश्रीयते[1] न अपूर्वतया कल्प्यत इति। तदपि न साधु लक्ष्यते। यावता तत्रापि परस्परसंसर्गयोग्यार्थलिङ्गेन संसर्गानुमानमेव जातम्[2]। तथा हि—विगीतः[3] श्वेतपदार्थः क्षिप्रगामी तुरगो भवितुमर्हति खुरनिष्पेषहेषाशब्दवत्त्वात्, सम्प्रतिपन्नतुरगवत्—इति। न पदार्थानां किञ्चित् प्रमाणान्तरं प्रसिद्धं अस्ति, सप्तमप्रमाणानभ्युपगमात्; अतो भवत्येव गुरुतरा शक्तिकल्पना अभिहितान्वयवादे। अन्विताभिधानवादे तु पदानामेव संसृष्टार्थप्रतिपादनशक्तिः एकैव कल्प्यते, अन्वितपदार्थस्वरूपस्मारकत्वं तु पदानां अन्विताभिधानव्यापारनान्तरीयकं इति न पृथक् शक्तिकल्पना।

नन्विदमत्र भवान् प्रष्टव्यः 'किं पदानि संनिधापितानामेवार्थानां अन्वयमाचक्षीरन् आहोस्वित् असन्निधापितानामपि' इति। आद्ये कल्पे[4] गोपदेन आनयनसंसृष्टस्वार्थाभिधाने सति आनयेति पदेन गोपदार्थसंसृष्टस्वार्थाभिधानं, आनयेति पदेन च[6] गोपदार्थसंसृष्टस्वार्थाभिधाने सति गोपदेन तत्संसृष्टार्थाभिधानं इति दुर्वारः परस्पराश्रयदोषः[7]। अथोत्तरः कल्पः, अनियतस्तदा वाक्यार्थः प्रसज्येत इति।

उच्यते। पदानां अन्त्यपदोच्चारणपर्यन्तं क्रमेण श्रोत्रपथमवतरतां अनन्वितस्वार्थेषु स्मृतिमात्रहेतुत्वाभ्युपगमात् तेषामेव पुनः अन्त्यपदश्रवणसमनन्तरमेव[8] युगपत् एकस्मृतिगोचरतां आचरतां[9] अन्विताभिधायित्वं इति नान्योन्याश्रयदोषप्रसङ्गः, नाप्यसन्निधापितपदार्थान्विताभिधानेन[10] वाक्यार्थानियमप्रसङ्गः। पदार्थानामेव संसर्गप्रतिपादकत्वेऽपि समानावेतौ चोद्यपरिहारौ।

१. A: आश्रीयेत
२. B omits जातम्
३. B: विहित
४. B omits कल्पे
५. B: तत्संसृष्ट
६. A E omit च
७. B: श्रयत्वदोषः
८. A B: अन्य ; E अन्त्य which is correct
९. A E omit आचरतां
१०. A E insert च

प्रायश्चित्तानां च पतितानां कर्मानधिकारात् तेषां यावदायुर्विद्यायामनधिकारः प्राप्तः । तत्र[1] महापातकेष्वगणनात् ततः[2] परस्य दोषस्याभावादवरत्वे चोपपातकादि-सामान्यप्रायश्चित्तावतारात् विशेषप्रायश्चित्तवचनाच्च कृतप्रायश्चित्तानां कर्माधिकारात् विद्याधिकारो दर्शितः ॥

**बहिस्तूभयथापि स्मृतेराचाराच्च** ॥ ३. ४. ४३ ॥

शिष्टव्यवहारयोग्यानां दोषेणापवादे प्राप्ते प्रायश्चित्तेन च तस्मिन् निराकृतेऽपवादाभावे उत्सर्गस्थितिरिति न्यायेन तैः शिष्टसंव्यवहाराद्याचारस्य धर्मतया विद्याङ्गत्वं प्राप्तम् । ब्रह्महत्त्यादिविषये "नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कलुषं तु निर्हन्यते[3]" इति स्मृतिलिङ्गादाचाराच्च बहिष्कर्तव्यत्वात् न तैर्व्यवहारलक्षणस्याचारस्य विद्याङ्गतेत्युक्तम् ॥

**स्वामिनः[4] फलश्रुतेरित्यात्रेयः** ॥ ३. ४. ४४ ॥

**आर्त्विज्यमौडुलोमिस्तस्मै हि परिक्रियते** ॥ ३. ४. ४५ ॥

**श्रुतेश्च** ॥ ३. ४. ४६ ॥

अङ्गाश्रितोपासनेषु उद्गीथादीनां प्राप्तोद्देशनत्वात् क्रत्वधिकारिण एव प्राप्तेः, अन्यस्याप्राप्तेरुद्देशनासंभवात् तदाश्रितान्युपासनानि[5] गोदोहनवदधिकृताधिकारीणि[णीति] क्रत्वधिकारिण एव गोदोहनफलवद्विद्याफलसंबन्धः। तत्र 'यः कर्ता स[6] फली' इति न्यायानुगृहीतात् "वर्षत्यस्मै[7] य उपास्ते" इति लिङ्गात् स्वामिकर्मण्यङ्गोपासने प्राप्ते "एवंविदुद्गाता आत्मने वा यजमानाय वा" "एवंविदुद्गाता ब्रूयात् कं ते कामम्" इत्यादिश्रौतलिङ्गैः अङ्गतत्संबन्ध्युपाङ्गगोदोहनादिकर्तृत्वस्या-

१. T and M omit तत्र
२. M. तदपरस्य
३. M. न हन्यते इति विगानाचाराच्च
४. G omits this sutra.
५. M adds च
६. G adds एव
७. G. वर्षति हास्मै

र्त्विज्यत्य यजमानेन दक्षिणया क्रीतत्वात् कर्तुरेव फलं युक्तमिति न्यायानुगृहीतैः उपासनानां यजमानगामिफलत्वं ऋत्विक्कर्तृत्वं च दर्शितम् ॥

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥**

३. ४. ४७ ॥

**कृत्स्नभावात्तु गृहिणोपसंहारः** ॥ ३. ४. ४८ ॥

**मौनवदितरेषामप्युपदेशात्** ॥ ३. ४. ४९ ॥

वाक्यभेदप्रसङ्गाच्चतुर्थाश्रमवाचित्वाभावात् "मन ज्ञाने" इति धात्वर्थानुगमे "पाण्डित्यं निर्विद्य" इति विहितत्वात् "अथ मुनिः" इत्यनुवादमात्रमिति प्राप्ते, मुनिरिति ज्ञानोत्कर्षवति पुरुषे प्रसिद्धत्वात् "मौनं न निर्विद्य" इति पुरुषात्[2] ज्ञानोत्कर्षं निष्कृत्य निर्वेदनीयत्वाभिधानलिङ्गात्[3][4], युक्तिभिः ज्ञाननिर्मलीकरणस्य च विद्यापेक्षितत्वात् अपूर्वत्वाच्च उपरिधारणवन्मौनं वाक्यभेदेन विद्यासहकारित्वेन विधीयत इत्युक्तम् ॥

**अनाविष्कुर्वन्नन्वयात्** ॥ ३. ४. ५० ॥

बालस्य भावः कर्म वा इति बाल्यशब्दव्युत्पत्तौ कर्मपक्षे श्रूयमाणविधियोग्यत्वात् सामान्यप्रवृत्तस्य[5] नियमशास्त्रस्य ब्रह्मविद्विषये[6] यथोपपादं मूत्रपुरीषत्वादिविशेषविधिसामर्थ्यात् अन्यत्र सङ्कोचात् बालकर्मैव[7] विधीयत इति प्राप्ते बालकर्मणो बालभावस्यैवाभ्यर्हितत्वात् तद्धितस्य च भावेऽप्यविशेषात् सामान्यशास्त्राविरोधकल्पनापरिहाराच्च प्रशान्तेन्द्रियत्वादि यत्नसाध्यं मुमुक्षोर्विधीयत इत्युक्तम् ॥

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्** ॥ ३. ४. ५१ ॥

१. T adds लिङ्ग

२. M. पुरुषज्ञानो

३. M. निर्वर्तनीय

४. M omits लिङ्ग

५. T. प्रवृत्तिनियम
M. प्रवृत्त

६. M. ब्रह्मबुद्धि...मूत्र

७. M. बालकर्मस्यैव

परिदृश्यमानसंसारनिमित्तशोकपरिहाराय विद्यासाधनोपादानात् श्रवणादीनां दृष्टद्वारेण चक्षुरादिवद्विद्यासाधनत्वाच्च कारीर्येवघातवत्[1] समानजन्मस्यैव विद्याफलहेतुत्वम्, अन्यथा त्वात्यन्तिकप्रतिबन्धः[2] कारणपौष्कल्याभावो वा श्रवणादीनां कल्प्येत इति प्राप्ते, परिदृश्यमानसंसारनिमित्तशोकस्यानेकजन्मानुयायित्वमवगच्छतो यदाकदाचिदनर्थनिवृत्तिः स्यादित्यभिसन्धिसंभवात्, श्रवणादीनां[3] विधानादेवादृष्टद्वारेणापि साधनत्वात् "अनेकजन्मसंसिद्धः" इत्यादिस्मृतिलिङ्गाच्च[4] श्रवणादीनां पौष्कल्येऽपि पश्वादिफलचित्रादियागवत् प्रतिबन्धक्षयमपेक्ष्य इह जन्मनि जन्मान्तरे वा विद्योदयफलं कल्प्यत इति नानैकान्तिकत्वं[5] विद्यासाधनानामित्युक्तम्[6] ॥

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥**

**३. ४. ५२ ॥**

काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयदर्शनात् श्रवणाद्यन्तरङ्गबहिरङ्गतदभ्यासादिसाधनोपचयापचयाभ्यां विद्यायामप्युपचयादिभावात् मुक्तावप्युपचयादिभावे स्वर्गादिफलवत्प्राप्ते मुक्तिस्वरूपब्रह्मैक्यरूपत्वावधारणात्[7] शास्त्रविरोधादनुमानस्य निवर्तनीयचित्तविक्षेपोपचयादिभावात्[8] तन्निवृत्तावेव साधनोपचयादेरुपक्षयात्, कलुषादिप्रतिबन्धनिवृत्तिचिराचिरद्वारेण विद्यायामपि[9] चिराचिराभिव्यक्तिसंभवाच्च न मुक्तावुपचयादिभाव इत्युक्तम् ॥

इति प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे

**तृतीयाध्यायस्य चतुर्थः पादः ॥**

---

१. M. कारीर्यादिवत्
२. G and T. न्यथात्वनिर्बन्धः
३. T and M omit श्रवणादीनां
४. M omits च
५. T and M. नानैकत्वं
६. T omits इत्युक्तम्
७. G and T. रूपविद्यावधारण
८. M. भावनिवृत्तावेव
९. M. विद्या अपि

# अथ चतुर्थाध्यायः ॥

## प्रथमः पादः

---

**आवृत्तिरसकृदुपदेशात्** ॥ ४. १. १ ॥

**लिङ्गाच्च** ॥ ४. १. २ ॥

फलमुद्दिश्य विहितानां ज्योतिष्टोमादीनां यावत् शब्दपरिमितं कर्मरूपं[1] तावतः सकृदनुष्ठानादेव कृतार्थत्वदर्शनात्[2] अहंग्रहोपासनेषु श्रवणादिषु च यावत्[3] शब्दपरिमितमुपासनादिकर्मरूपं तावतः सकृदनुष्ठानादेव फलसिद्धेः आवृत्त्यनपेक्षेति सामान्यन्यायेन प्राप्तम् । तत्र "यस्य स्यादद्धा" "देवो भूत्वा" इति च लिङ्गादुपास्यमानसाक्षात्करणलक्षणदृष्टफलद्वारेण अदृष्टसाधनत्वे वक्तव्ये यावद्दृष्टफलं तावदवघातादिविधिवदर्थसिद्धावृत्तिगुणविशिष्टमेवोपासनाकर्म विधीयते फलपर्यन्तमेव हि कर्म विधिविषय[4] इति[5] विशेषन्यायेनावृत्तिरहंग्रहोपासनेषु श्रवणादिषु च विहितेत्युक्तम् ॥

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च** ॥ ४. १. ३ ॥

द्रष्टृद्रष्टव्य[6]नियन्तृनियन्तव्याधिष्ठात्रधिष्ठेयेशित्रीशितव्यत्वादि[7]संबन्धैः जीवब्रह्मणोः भेदलिङ्गैः "द्वा सुपर्णा" "ऋतं पिबन्तौ" इति द्वित्वश्रुतेश्च जीवब्रह्मणोर्भेदे सिद्धे असंसार्यात्मतत्त्वस्य संसारिजीव[8]प्रत्यक्षेण विरोधाच्च ममेश्वर इति प्रतिपत्तौ प्राप्तायाम् "नान्योऽतोऽस्ति द्रष्टा" "नान्यदतोऽस्ति द्रष्टृ" "नेह नानास्ति

१. T and M. कर्मस्वरूपं तावत्
२. M. कृतार्थत्वं दर्शनोऽहंग्रह-
३. T. यावच्छास्त्र
४. T and M omit विधि
५. T. इति शेष-
६. G adds मन्तृमन्तव्य
७. M. तव्यादि
८. G and T. जीवि

किञ्चन" इति फलवत्प्रमाणान्तरानधिगत[1]भेदप्रतिषेधविषयतया तात्पर्यवत्या भेदनिषेधश्रुत्या[2] अविवक्षितभेदलिङ्गानां बाधात्, भेदाभेदे[3] निषिध्यमानभेदस्यैव सत्वे एकस्यैवैकोपाधौ सत्त्वासत्त्वप्रसङ्गात्, "स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः।" इति प्रमाणान्तरानधिगत[4]तत्फल[गतसफल]त्वाभ्यां तात्पर्यवदेकत्वश्रुत्या[5] पूर्वसिद्धद्वित्वानुवादिकायाः "द्वा सुपर्णा" इति द्वित्वश्रुतेः चन्द्रैकत्वेन द्वित्वस्यैव बाधात्, सत्यप्येकत्वे द्वित्वस्यातुल्यप्रमाणेन व्यवस्थापयितुमशक्यत्वात्, दुःखित्वादि-धर्मप्रत्यक्षस्य विप्रकृष्टस्य सन्निहिततरेण ब्रह्मात्मप्र[6]त्यक्षेण अनुमानस्येव बाधात् बिम्बप्रतिबिम्ब[7]वत् सर्वप्रकारविरोधाभावात् "अहं ब्रह्मास्मि" इति तादात्म्यवाक्यैः आत्मा ब्रह्मेति प्रतिपत्तव्यमित्युक्तम्॥

## न प्रतीके न हि सः॥ ४. १. ४॥

ब्रह्मदृष्टि[8]र्युक्तानि प्रतीकान्यप्यहमित्येव प्रतिपत्तव्यानि, ब्रह्मद्वारेणात्मना-भिन्नत्वात्। यत्र उपास्यस्यात्मनाभेदः तत्राहंबुद्धिर्दृष्टा, यथा ब्रह्मणीति प्राप्तम्[9]। तत्र ब्रह्मोपासनेषु[10] "एष त आत्मान्तर्हृदि[11]" "एष त आत्मापहतपाप्मा" इत्येवमाद्यैक्यव्यपदेशात् सगुणनिर्गुणेष्वहंबुद्धिरुक्ता; इह तु न प्रतीकान्यह-मित्युपास्यानि, ऐक्यचोदनाभावे सति स्वरूपतो भिन्नत्वात्, उद्गीथादिवत् इत्य[12]नुमानात् यथाप्रतिभासं भेदेनैवोपास्यानि प्रतीकानीति सिद्धम्॥

## ब्रह्मदृष्टिरुत्कर्षात्॥ ४. १. ५॥

"आदित्यो ब्रह्म" इत्यादिसामानाधिकरण्यविशेषे तयोः कस्योपास्य-त्वमिति विशये सत्युत्कृष्टनिकृष्टयोः उत्कृष्टमेवोपास्यम्, फलविशेषवत्त्वात्, राजादिवत्

१. T and M. अनधिगततद्भेद
२. G. निषेधे
३. G adds अपि
४. G and T. गतफल-
५. G and T. एकश्रुत्या
६. G and T. ब्रह्मात्मना प्र-
७. M omits प्रतिबिम्ब
८. T and M omit दृष्टि
९. G omits प्राप्तं
१०. G and M add "तत्त्वमसि"
११. T. हृदये
१२. G. वदिति प्रत्यनु

इत्यनुमानेनादित्यादिनिकृष्टबुद्धिविशिष्टमपि ब्रह्म चोदनावशात् फलविशेषाय[1] ब्रह्मसंबन्धिप्रतीकोपासनेषु उपास्यमिति प्राप्तम् । तत्र "आदित्यं ब्रह्मेत्युपास्ते" "आकाशं ब्रह्मेत्युपास्ते" इत्यादित्यादीनामेव द्वितीयाश्रुत्या, उपासनाकर्मत्वप्रतिपादिकया ब्रह्म[2]शब्दस्य अर्थपरत्वं बाधित्वा प्रत्ययपरत्वप्रतिपादिकया च इतिशब्दश्रुत्योपबृंहितया निकृष्टमुत्कृष्ट[3]बुद्ध्या वेदनीयमिति च[4] न्यायानुगृहीतया अनुमानबाधात् असञ्जातविरोधितया प्रथमश्रुता आदित्यादय एव चरमश्रुततया सञ्जातविरोधित्वात्[5] प्रत्ययमात्रपणब्रह्मदृष्टिविशिष्टविशेषवत्तयोपास्यमानब्रह्मसामर्थ्यलब्धफलविशेषा उपास्या[6] विष्णुदृष्टिविशिष्टेव प्रतिमेत्युक्तम् ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४. १. ६ ॥

कर्माङ्गानां क्रियासमवायात्, क्रियात्मकानां फलसाधनतयोत्कृष्टत्वात्, "असौ वा आदित्य उद्गीथः" इत्यादौ चरमश्रुतत्वाच्च पूर्वाधिकरणन्यायेनाङ्गदृष्टिविशिष्टानामादित्यादीनामुपास्यत्वे प्राप्ते, "उद्गीथमुपासीत" "सामोपासीत[7]" इत्यादौ कर्माङ्गानामेवोपासनाकर्मत्वप्रतिपादिकया द्वितीयाश्रुत्या फलसाधनभूताङ्गेभ्यः फलभूतानामादित्यादीनाम्[8]उत्कृष्टबुद्ध्या निकृष्टं वेदनीयमिति न्यायानुगृहीतया प्रथमश्रुताभिरप्यादित्यादिदृष्टिभिर्विशिष्टानि कर्माङ्गान्येवोपास्यतया विधीयन्ते, प्रथमश्रुतन्यायस्य श्रुते[9]र्दुर्बलत्वादित्युक्तम् ॥

## आसीनः संभवात् ॥ ४. १. ७ ॥

## ध्यानाच्च ॥ ४. १. ८ ॥

## अचलत्वं चापेक्ष्य ॥ ४. १. ९ ॥

१. M. विशेषाच[च]
२. G omits ब्रह्म...प्रतिपादिकया
३. T and M. कृष्टबुद्ध्या
४. G omits च
५. M. विरोधात्
६. M. उपास्यविष्णु
७. G omits सामोपासीत
८. G. दीनामुत्कर्षादुत्कृष्ट
९. G and M. श्रुतेर्बलवत्त्वात्

## स्मरन्ति च ॥ ४. १. १० ॥

मनःशरीरयोः भिन्नत्वान्मनोव्यापारमुपासनं प्रति शरीरव्यापारस्यानुपकारित्वात् यया कयाचिदवस्थया वर्तमानेऽपि शरीरे मानसमुपासनं सुगममिति प्राप्ते, मनःशरीरयोः बहिःप्रवृत्तिनिवृत्त्योः एकयोगक्षेमत्वात्, शरीरेऽनवस्थिते मनोऽनवस्थायाः प्रत्यक्षत्वात्, आसीनेऽचलावयवे शरीरे प्रतिष्ठितेनमनसा अनङ्गाश्रितान्युपासनानि कर्तव्यानीत्युक्तम् ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ४. १. ११ ॥

अनङ्गोपासनान्यपि दिग्देशकालनियतानि, चोदनालक्षणत्वात्, यागादिवत्। तत्रोपास्ये वस्तुनि चित्तैकाग्र्यमन्तरङ्गम्। तच्च रजस्तमःपरिक्षयेण सत्त्ववृत्त्युद्भवापेक्षम्। स चोद्भवः कदाचित् प्राक्प्रवणादिदेशे प्रदोषादिकाले प्राच्यादिदिशि चोत्पद्यते, कदाचिद्देशकालदिगन्तरेषूत्पद्यत इति सत्त्ववृत्त्युद्भवेनापन्नचित्तैकाग्र्यं कालान्तरादावुत्पन्नमनपेक्ष्यैव प्रदोषादिकालाद्यपेक्षमाणस्य तत्र चित्तैकाग्र्याभावात् उपासनायोगात्, शेषिविरोधादनुमानस्य यत्रैकाग्र्यं तत्रोपास्यमित्युक्तम् ॥

## आ प्रायणात् तत्रापि हि दृष्टम् ॥ ४. १. १२ ॥

अहंग्रहोपासनेषूपास्याविर्भावे सिद्धे दृष्टफलद्वारेणादृष्टफलसिद्धेरवघातादिवदा प्रायणादननुष्ठाने प्राप्ते अवघातादिष्वपि दृष्टफलस्य तण्डुलादेरदृष्टसाधनत्वव्यवधानद्वारेणैवादृष्टसाधनत्वादिहापि देहपातादनन्तरमारभ्यमाणविद्यासाध्यादृष्टफलंप्रति व्यवहितस्यापरोक्षस्योपकारकत्वाभावात्, अदृष्टफलारम्भाय तत्सन्निहितेऽप-

१. T and M. व्यापारोपा
२. M. बहिर्वृत्ति
३. G. प्रतिष्ठिते
४. M. ग्रहेण
५. M. सत्त्वाद्भवः
६. M. प्राच्यां दिशि
७. G omits एव
८. G. दृष्टफले तद्द्वारेणादृष्टसिद्धेः
९. T and M. अनुष्ठाने
१०. G. साध्यकत्वर्थव्यवधानद्वारे-
११. G. दृष्टफलसाध
T. दृष्टक्रतुफलसाध

रोक्षान्त्यप्रत्यये[1] दृष्टफले वक्तव्ये भावनाविच्छेदे तदयोगात्, कर्मणामपि[2] स्वफलविषयान्त्यभावनाजनकत्वप्रसङ्गेन विद्यायाः पाक्षिकफलवत्त्वप्रसङ्गात्, कर्मविरोध[3]द्वारेणोपास्यान्त्यप्रत्ययजननायाभिनवतया[4] प्राबल्यसिद्ध्यर्थमा प्रायणादुपासनं कर्तव्यमिति स्थितम्[5] ॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥

॥ ४. १. १३ ॥

यद्यपि यथा प्रायश्चित्तस्य दुरितक्षयहेतुत्वं प्रायश्चित्तविध्यन्यथानुपपत्त्या मीयते शब्देनैव तथा " विद्वान् पुण्यपापे विधूय विदित्वा " " न लिप्यते कर्मणा पापकेन " इति ज्ञानदुरितनाशयोः इतरेतरसाध्यसाधनभावसाकाङ्क्षयोः एकपुरुषसंबन्ध[6]निर्देशान्यथानुपपत्त्या विज्ञानस्य दुरितक्षयहेतुत्वं पुरुषार्थाधिकरणन्यायेन प्रमातुं शक्यते, तथापि " कलञ्जं न भक्षयेत् " इत्यादिप्रतिषेधविध्यन्यथानुपपत्त्या दुरितस्यानिष्टफलपर्यन्तत्वेऽवगते नार्थवादान्य[7]थानुपपत्त्या विद्यया दुरितक्षयः प्रमातुं शक्यत इति प्राप्तम् । तत्रापहतपाप्मत्वादिलक्षणब्रह्मात्मज्ञानमात्मन्यशेषदुरितनिवर्तकम्, तस्मिन् दुरितकर्तृत्वादिबाधकत्वात्, स्वप्नगतसुरापानादिकर्तृत्वबाधकतयाचित्त[भिमत]दुरितबाधकजाग्रत्प्रबोधवदिति विद्या[8]सामर्थ्येन मोक्षशास्त्र[9]प्रामाण्यान्यथानुपपत्त्या चानुगृहीतया अर्थवादप्रतिपन्नविद्यादुरितक्षयैकपुरुषसंबन्धान्यथानुपपत्त्या सामान्यप्रवृत्तां प्रतिषेधविध्यन्यथानुपपत्तिमपबाध्य [10]ब्रह्मविद्विशेषविषये विद्यया दुरितक्षयः प्रमीयत इत्युक्तम् ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४. १. १४ ॥

१. T and M. क्षाप्रत्यय
२. G omits कर्मणामपि...प्रसङ्गात्
३. M. कर्मविरोध
४. M. भिधानार्थतया
५. G. इत्युक्तम्
६. M. संबन्धि
७. G omits अन्यथा
८. M. सामान्येन
९. M. अप्रा
१०. T and M. ब्रह्मविद्याशेष

न विद्यापुण्ये बाध्यबाधकभूते, चोदनालक्षणत्वात्, अग्निहोत्रदर्शपूर्णमासवदित्यनुमानानुगृहीतया पुण्यस्य फलपर्यन्तताप्रतिपादकविध्यन्यथानुपपत्त्या विरोधात् " विद्वान् पुण्यपापे विधूय " " क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे " इत्याद्यर्थवादगततया विद्यापुण्यक्षययोः इतरेतरसाध्यसाधनभावसाकाङ्क्षयोः एकपुरुषसंबन्धसन्निधानान्यथानुपपत्त्या न विद्यानिमित्तः पुण्यनाशः प्रतिपत्तुं शक्यत इति प्राप्तम् । तत्र पूर्ववद्विद्यासामर्थ्यमोक्षशास्त्रान्यथानुपपत्त्यनुगृहीतया पूर्वोक्तयानुपपत्त्या सामान्यप्रवृत्तां विध्यन्यथानुपपत्तिं बाधित्वा ब्रह्मविद्विशेषविषये विद्यया पुण्यक्षयः साधितः ॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४. १. १५ ॥

विद्यासामर्थ्यानुगृहीतात् श्रुतिसामान्यात् शरीरारम्भककर्मणोऽपि विनाशः प्राप्तः । तत्र " तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये " इति शरीराद्विमोक्षणं संसारानुगमस्य मुक्त्यारम्भस्य चावधिरित्युक्तम् । यदि विज्ञानसमकालमेव सर्वकर्मक्षयात् मुक्तिः स्यात्, विज्ञानमेवावधिं ब्रूयात् । ततश्चावध्यन्तरकरणलिङ्गात् विज्ञानादुत्तरकालमपि कञ्चित्कालं शरीरमनुवर्तमानं कर्मसद्भावं गमयति । तत्रोद्दालकवसिष्ठादीनां तत्त्वदर्शिनामेव शरीरधारणविषयैः श्रुतिस्मृतिलिङ्गैः तत्त्वदर्शिभिरपि गुरुशिष्यसंबन्धनिर्देशान्यथानुपपत्त्या चानुगृहीतम् " तस्य तावदेव चिरम् " इति लिङ्गं तत्त्वज्ञानस्यारब्धकर्मनिवर्तने पाटववैकल्यं प्रतिबन्धं वा कल्पयित्वा आरब्धकर्म परिशेषयति सामान्यश्रुतिं बाधित्वेति दर्शितम् । तदुपभोगापेक्षि तद्वैत-

१. T and M. गततया
२. T and M. संबन्धेन संनि
३. M. क्तयात्यनुप
४. T and M. विध्यनुप-
५. T and M. ब्रह्मविद्याशेष-
६. G. विद्वच्छरीर-
७. T and M omit अथ संपत्स्ये
८. M. रादिमोक्षणं
९. M. अविधिरि-
१०. G and T. आरम्भककर्म
११. G. सामान्यक्षयश्रुतिं
१२. T and M. पेक्षत्वात् द्वैत

दर्शनं विद्यासंस्कारैः संस्कारतया स्मृतिहेतुभिरपि चैतन्यस्याविद्यावद्दोषतयापरोक्ष-भ्रमहेतुभिरेवोपपद्यत इत्युक्तम् ॥

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** ॥ ४. १. १६ ॥

**अतोऽन्यापि ह्येकेषामुभयोः** ॥ ४. १. १७ ॥

**यदेव विद्ययेति हि** ॥ ४. १. १८ ॥

नित्या[1]ग्निहोत्रादीनां स्वर्गादिसमुद्दिष्टफलाभावात् सगुणविद्यादिभिः सहाप्येकफलारम्भकत्वसंभवेन विरोधाभावात् विद्यया तेषां क्षयाभावप्राप्तावपि सुकृतक्षेय-शब्दसामान्यात्[2] क्षय एव प्राप्तः। तत्र सु[3]कृतक्षयशब्दस्य काम्येष्वपि सावकाशत्वात् सगुणविद्यासाध्यफलविरो[4]धाभावे च सति नित्यकर्मविधिसामर्थ्यादेव सगुणविद्वदनुष्ठितकर्मविशेषक्षये सामान्यश्रुति[5]मपबाध्य विद्यया सहैकफलत्वं दर्शितम् ॥

**भागेन त्वितरे क्षपयित्वा संपद्यते** ॥ ४. १. १९ ॥

निर्गु[6]णब्रह्मविद्वानारब्धकर्मक्षयानन्तरमपि संसारी, विद्यावत्त्वेऽपि[त्त्वे सति] संसारसंबन्धयोग्यत्वात्, पूर्व[7]कालीनब्रह्मविद्व[8]दित्यनुमानेन संसारनिमित्तकल्पनाम् "अथ संपत्स्ये" इत्यादिश्रुत्या बाधित्वारब्धकर्मक्षयानन्तरं मुक्तिरुक्ता ॥

इति भगवत्प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे

चतुर्थाध्यायस्य प्रथमः पादः

---

१. M omits नित्य
२. T and M. क्षयशब्दस्त्वसाम्यात्
३. M. सुकृतविषयक्षयस्य
४. M. विरोधे च
५. M. मपि वाक्यविद्यया
६. T and M. ब्रह्मनिष्ठविद्याना
७. M. काल
८. T and M. विद्यावत्.

# अथ द्वितीयः पादः ॥

---

**वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४. २. १ ॥**

**अत एव च सर्वाण्यनु ॥ ४. २. २ ॥**

यद्यपि मनसि वृत्तिमत्येव वाचो लयदर्शनस्येन्द्रियतद्वृत्त्योः साधारणत्वात् इन्द्रियतद्वृत्त्योरप्रकृतित्वेन [1]मनसि लयसंभवस्य तुल्यत्वाच्च "वाङ्मनसि" इति शब्दानु[2]सारेणेन्द्रियाणामेव मनसि लयः प्राप्तः, तथापि "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्युत्क्रान्तिसमयेऽपीन्द्रियसद्भा[3]वस्य तुल्यत्वाच्च वाङ्मनसीति शब्दानुसारेण लिङ्गात् प्रकृतौ लयाभावाच्चेन्द्रियाणां [4]वृत्तिविरोधिनि मनःसंसर्गविशेषे सति मनसि वृत्तिलय इत्युपचर्यते, शब्दस्य मुख्यार्थासंभवादित्युक्तम् ॥

**तन्मनः प्राण उत्तरात् ॥ ४. २. ३ ॥**

[5]एवन्नयोः प्रकृति[6]विकृतिभावान्मनसः प्राण[7]वशित्वलिङ्गेन प्राणाकारपरिणतानामम्मात्राणां मनःसंस्थिताकारपरिणामात् प्राणप्रकृतेर्[8]मनसस्तत्र यथाशब्दं स्वरूपलये प्राप्ते, मनःपरिस्पन्दनस्य प्रा[9]णायत्तत्वात्तन्मात्रेण मनःप्राणयोः स्वरूपेण प्रकृतिविकारभावादसंभवन्मुख्यार्थे शब्दे मनसः प्रवृत्तिविरोधिनि प्राणसंसर्गविशेषे प्राणे[10] वृत्तिलय उपचर्यते ॥

**सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४. २. ४ ॥**

१. M. मनसि च लयसंभवस्य
२. M. सारेन्द्रिय
३. M. सद्भावलिङ्गात् प्रकृतौ
४. G. प्रवृत्ति-
५. M. मुग्धन्नयोः
६. G omits विकृति
७. G. वश्यत्व
८. M. मनस्तत्र
९. G. णायत्ततामात्रेण
१०. M. प्राण

**भूतेषु तच्छ्रुतेः** ॥ ४. २. ५ ॥

**नैकस्मिन् दर्शयतो हि** ॥ ४. २. ६ ॥

"इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति लयश्रुतेरभिसमागमनशब्दात् "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यात्मानुगमनलिङ्गस्य प्राणस्यात्मनि लयेऽवगते "प्राणस्तेजऽसि" इत्यवधानश्रुतिं बाधित्वोभयविधश्रुत्यनुग्रहाय जीवे प्रलीय जीवेन सह प्राणस्य तेजसि वृत्तिलयः संसर्गविशेषो दर्शितः ॥

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य** ॥ ४. २. ७ ॥

"विद्ययामृतमश्नुते" इति सगुणोपास[1]नानामप्यमृतत्वफ[2]लेऽवगते "अस्य सौम्य पुरुषस्य प्रयतो वाङ्मनसि" "तमुत्क्रामन्तम्" इति च सामान्यपुरुषमात्रसंबन्ध्युत्क्रान्तेः सगुणोपासनादन्यत्रैव नियमे प्राप्ते "मनसैवैतान् कामान् पश्यन्" "स एकधा भवति" इति श्रुतेरर्चिरादिमा[3]र्गगमनेन शरीरेन्द्रियवता भोक्त[4]व्यफलत्वात् निरुपाधिकामृतत्वफलाभावात् कर्मिणामिव[5] साधारणैवोत्क्रान्तिः सगुणोपासकानामपी[6]त्युक्तम् ॥

**तदापीतेः संसारव्यपदेशात्** ॥ ४ २. ८ ॥

**सूक्ष्मं प्राणतश्च तथोपलब्धेः** ॥ ४. २. ९ ॥

**नोपमर्देनातः** ॥ ४. २. १० ॥

**अस्यैव चोपपत्तेरेष ऊष्मा** ॥ ४. २. ११ ॥

"परस्यां देवतायाम्" इति सत्संपत्तिरात्यन्तिकी, अन्तकालीनसत्संपत्तित्वात्, परब्रह्मविदः सत्संपत्तिवदित्यनुमानं देहान्तरोपभोग्य[7]फलकर्मज्ञानविध्यन्यथानुपपत्त्या बाधित्वा पुनरुत्थानयोग्यसावशेषसत्संपत्तिरुक्ता ॥

१. G and T. सकानां
२. T and M. फलतोच्यते
३. T and M. मार्गमनेन
४. M. भोग्यफलत्वाभावात्
५. M. एव
६. T and M omit अपि
७. T and M omit फल

**प्रतिषेधादिति चेन्न शारीरात्** ॥ ४. २. १२ ॥

**स्पष्टो ह्येकेषाम्** ॥ ४. २. १३ ॥

**स्मर्यते च** ॥ ४. २. १४ ॥

"न तस्मात्प्राणा उत्क्रामन्ति" इति माध्यन्दिनश्रुत्यनुसारेण "न तस्य प्राणा उत्क्रामन्ति" इति काण्वश्रुतिं संबन्धसामान्यषष्ठ्यर्थविषयामपादानकारकसंबन्धविशेषपरतयोन्नीय जीवात् प्राणानामुत्क्रान्तिं प्रतिषिध्य शरीरादुत्क्रान्तिः सामान्यश्रुतिलोकप्राप्ता परविदोऽपि प्रापिता । तत्र "यत्रायं पुरुषो म्रियते" इति यच्छब्दनिर्दिष्टां सशब्देन परामृश्योच्छ्वय[1]नादिधर्मनिर्देशात् यच्छब्देन शरीरमे[2]भिधीयते; "उदस्मात्प्राणाः क्रामन्ति" इति यच्छब्दार्थमुद्दे[थोंद्दे]श्य[3]गतमिदंशब्देनोपादेयवाक्य[4]गतेन सर्वनाम्ना नित्यसंबन्धाच्छरीरमेवापा[5]दानत्वेन परामृश्य प्रश्नपूर्वकमुत्क्रान्तिप्रतिषेधात्, विद्याप्रकरणात् ब्रह्मविदः शरीरात् प्रा[6]णानामुत्क्रान्तिरार्तभागप्रश्ने प्रतिषिद्धा, तत्रोभाभ्यामपि वाक्याभ्यां शरीराज्जीवाच्च प्राणानामुत्क्रान्तिं प्रतिषिध्यतामुभयोरपि वाक्ययोः "अत्रैव समवलीयन्ते" इत्युत्क्रान्तिप्रतिषेधापादाने जीवे शरीरे च सन्निहिताभिधायिसर्वनाम्ना[7] निर्दिष्टे प्रासादे पर्यङ्के मृत इतिवदात्मनि प्राणानां लयस्य प्रतिपादनात् "परब्रह्मविदो न कुतश्चिदपि प्राणानामुत्क्रान्तिः" इति सामान्योत्क्रान्तिश्रुतेरत्रानवकाश इत्युक्तम् ॥

अथवा "न तस्य प्राणा उत्क्रामन्ति" इत्यपादानका[8]रकापेक्षायाम् "चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः" इति शरीरावयवानामुत्क्रान्त्यपादानत्वेन प्रकृतानामिह संबन्धात् प्राप्तोत्क्रान्तिप्रतिषेधपरत्वाच्च वाक्यस्य 'न तस्य प्राणाः शरीरावयवेभ्य उत्क्रामन्ति' इति वाक्यं परिणम्य[9]ते, प्रकरणसामर्थ्यात्;

१. M. च्छ्वयतीति धर्म

२. G omits अभिधीयते

३. G. गतमेतच्छब्देन

४. M. गतवाक्यगतेन

५. G and T. उपादान

६. G. प्राणा नोत्क्रामन्तीत्यार्त-

७. G and T. नाम

८. G and T. कारणापेक्षायां

९. T and M. परामृश्यते

"प्राणेन रक्षन्नवरं कुलायम्" "एकीभवति न पश्यतीत्याहुः" "प्राणेषु हृद्यन्तज्योतिः पुरुषः" इति "विज्ञानमयः प्राणमयो मनोमयः" इत्यादौ कर्तृकरणसंबन्ध[1]-विशेषस्याधिष्ठेयाधिष्ठातृसंबन्धविशेषस्योपाध्युपहितसंबन्धविशेषस्य च प्रकृतस्य "न तस्य प्राणाः" इति सम्बन्धसामान्यषष्ठ्या समुच्चित्योपादानान्न शाखान्तरगतापादानसम्बन्धविशेषापेक्षा ; ततश्च तस्य[2] करणाधिष्ठेयोपाधिभूताः प्राणाः शरीरावयवेभ्यो नोत्क्रामन्तीति वाक्यार्थसिद्धेरुभाभ्यां माध्यन्दिनकाण्व[3]वाक्याभ्याम् ,

"नोत्क्रामन्ति मुनेः प्राणा व्यापी सर्वगतो हि सः ।
तेन प्राप्त[4]मिदं सर्वं कुत उत्क्रम्य यास्यति ॥"

इति स्मृत्यनुगृहीताभ्यां विरोधादप्राप्तप्रतिषेधप्रसङ्गाच्च, तस्येति विभक्तेस्तस्मादिति विपरिणामप्रसङ्गाच्च ; "न तस्मात्प्राणाः" इत्यपि तच्छब्देन जीवाद्भिन्नं शरीरमेवोपलक्ष्य विदुषः शरीरात् प्राणा नोत्क्रामन्तीत्युक्तम्[5] ॥

## तानि परे तथा ह्याह ॥ ४. २. १५ ॥

"गताः कलाः पञ्चदश प्रतिष्ठाः" इत्यादि[6]श्रुतेः प्रकृतावेव विकारलय इति न्यायानुगृहीताया भूतेषु ब्रह्मवित्करणलय इति प्राप्ते "पुरुषं प्राप्यास्तं गच्छन्ति" इति श्रुत्यनुसारेणा[7]विद्याकृतभूतसूक्ष्मेषु लीनाः सह भूतसूक्ष्मै[8]र्ब्रह्मण्यस्तं गच्छन्तीति कल्प्यते, अविद्याकृतभूतसूक्ष्मोपादानं लिङ्गशरीरम्, इतरदीश्वरमायोपादानमिति पक्षे[9] महाभूतसूक्ष्ममयब्रह्मणि लयो वाक्यद्वयसामर्थ्यात् कल्प्यत इति दर्शितम् ॥

## अविभागो वचनात् ॥ ४. २. १६ ॥

१. M omits संबन्ध
२. T omits तस्य
३. G and T. काण्वाभ्यां
४. T and M. व्याप्तं
५. T and M add इति दर्शितम्
६. G omits आदि
७. G adds अपि
८. G. शरीरादी-
९. M. पक्षे महाभूतसूक्ष्मोपादा[दान]-पक्षेऽपि भूतसूक्ष्ममयो ब्रह्मणि लयो

विदुषः परस्मिन्ब्रह्मणि [1]कलालयः सावशेषो भवितुमर्हति, ब्रह्मणि कला-[2]लयत्वात्, उत्क्रान्तौ [3]कलालयवदित्यनुमानस्य ब्रह्मभावमोक्षशास्त्रान्यथानुपपत्त्य-नुगृहीतया "भिद्येते तासां नामरूपे" इत्यस्तंगतानाममि सूक्ष्मनामरूप[रूपभेदन]-श्रुत्या बाधान्निरवशेषलयो दर्शित. ॥

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषग-त्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया** ॥४. २. १७ ॥

"चक्षुषो वा मूर्ध्नो वा" इत्यविशेषशास्त्रात् सगुणविदोऽपि ययाकया-चिन्नाड्या निष्क्रमणप्राप्तौ "तयोर्ध्वमायन्" इति विद्याप्रकरणामृतत्वफलाभ्यां मूर्धन्यनाड्या [4]गच्छतीत्युक्तम् ॥

**रश्म्यनुसारी** ॥ ४. २. १८ ॥

**निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात्** ॥ ४. २. १९ ॥

नाडीरश्मिसंबन्धस्य रात्रौ योग्यानुपलब्धिनिरुद्धत्वात् निशि मृतानां रश्म्य-नाल[रश्म्याल][5]म्बनत्वदिवस[6]प्रतीक्षयोरनुपपत्तेर्नादित्यगमनेन विद्याफलप्राप्तिरिति [7]प्राप्तौ कालविशेषेण[कालाविशेषणेन] नाडीरश्मिसंबन्धशास्त्रान्यथानुपपत्त्या रात्रावुष्णोपल-ब्धिलिङ्गाच्च मन्दान्धकारान्[8]तरितोपलब्ध्ययोग्यसूक्ष्मरश्मिसम्बन्धकल्पनया निशि मृतानामप्यादित्यगमनं रश्मिसम्बन्धद्वारेण विद्यत इति न पाक्षिकफलाविद्येत्युक्तम् ॥

**अतश्चायनेऽपि दक्षिणे** ॥ ४. २. २० ॥

**योगिनः प्रति च स्मर्यते स्मार्ते चैते** ॥ ४. २. २१ ॥

लोकप्रसिद्धिभीष्मादिशिष्टाचाराभ्यां दक्षिणायनमरणस्याप्रशस्तत्वादुत्तराय-

१. G and T. कलाप्रलयः
२. G and T. कलाप्रलय-
३. G and T. कलाप्रलय-
४. M. अभ्यागच्छति
५. M. लम्बनत्वं
६. M. प्रदीपक्षययोः
७. T and M. तत्र
८. G adds अपवरक

णस्य मार्गपर्वत्वाभावप्रसङ्गात् विदुषामपि दक्षिणायनमृतानां न विद्याफलसङ्गम इति प्राप्तौ, फलमुद्दिश्य विद्यो नान्यथानुपपत्त्या लोकप्रसिद्ध्यादिबाधादुत्तरायणाभिमानिदेवताया नित्यत्वेन दक्षिणायनेऽपि मार्गपर्वसम्भवाद्दक्षिणायनमृतनां विद्याफलप्राप्तिरस्तीत्युक्तम् ॥

इति प्रकाशात्मविरचिते शारीरकन्यायसंग्रहे

चतुर्थाध्यायस्य द्वितीयः पादः

१. G. च मार्गपर्वभूतस्य
M. मार्गस्य सर्वाभाव

२. G and T. त्रिद्य। विद्या

# अथ तृतीयः पादः ॥

## अर्चिरादिना तत्प्रथितेः ॥ ४. ३. १ ॥

प्रतिप्रकरणं विद्याभेदाद्गतिभेदानामपि विद्यागुणत्वेन चिन्तयितव्ये[1] गुणभेदात् गुण[गुणी]भूतगतिभेदे प्राप्ते, अर्चिरादिमार्गविशेषणानामादित्यवाय्वादीनां गतिभेदेषु प्रत्यभिज्ञानात्[2] गन्तव्याभेदाच्चार्चिर्धूमादिमार्गद्वयव्यतिरेकेण[3][4] तृतीयस्थानत्वलिङ्गाच्चो-पासनाभेदेऽप्युपास्यब्रह्मैक्यवत् गुणीभूतगत्यैक्योपपत्तेरर्चिरादिकैव[5][6] एकैव गतिरित्युक्तम्॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४. ३. २ ॥

"देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकमागच्छति" इति पाठक्रमादर्चिरनन्तरमग्नेश्च प्राग्वायोर्निवेशे प्राप्ते, "स वायुलोकमागच्छति तस्मै सतत्र विजिहीते" इति श्रुत्यन्तरे वायुप्रत्तेन मार्गेणोर्ध्वमादित्यमाक्रमत इत्यर्थक्रमदर्श-नेन पाठक्रमं बाधित्वा आदित्यात्पूर्वो वायुर्निवेशितः ॥

## तडितोऽधि वरुणः संबन्धात ॥ ४. ३. ३ ॥

"स वायुलोकं स वरुणलोकम्" इति वरुणादीनां पाठक्रमेण वायोरूर्ध्व-मादित्यात्प्रागर्थक्रमविरोधेन निवेशानुपपत्तेर्निवेशस्थानान्तरादर्शनाच्च[7] वरुणादीनां मार्गपर्वत्वेन संबन्धाभावे प्राप्ते, विद्युत उपरिष्टाज्जलगर्भितमेघदर्शनात् आगन्तूना-मन्ते निवेशः इति न्यायाच्च तडितोऽधि वरुणादयो निविशेरन्नित्युक्तम्[8] ॥

## आतिवाहिकास्तल्लिङ्गात् ॥ ४. ३. ४ ॥

१. M. तथ्यगुणिभेदात्

२. M. अप्रत्यभि

३. M. गन्तव्यभेदा

४. T and M. व्यतिरेके

५. G and T. गुण-

६. T and M. दिकैव

७. M omits च वरुणादीनां...वा प्राप्ते

८. T and M. निविशेयुः

## ॥ क्रियानपेक्षप्रामाण्यनिरूपणं द्वादशम् ॥

निर्मृष्टा[1]खिलकार्यबन्धे[2]मपि यै[3]त् द्वैतप्रपञ्चास्पदं
नोत्पाद्यं न विकार्यमाप्यमथवा संस्कार्यरूपं च न ।
यत्रैषोपनिषद्विहाय विविधं कार्यान्वयं सङ्गता
तात्पर्येण तमेकमव्ययमजं वन्दे मुकुन्दं सदा ॥

इदं[4]मिदानीं चिन्त्ये[5]ते ' किं शब्दः क्रियाव्यवधानेनैव ब्रह्मणि प्रमाणम्, आहोस्वित् तदन[6]पेक्ष एव ? ' इति । इह किल लोके शब्दं प्रयुञ्जानः श्रोतुः साक्षाद्वा परम्परया वा किञ्चित् प्रयोजनमुद्दिश्यैव शब्दं प्रयुङ्क्ते । तच्च[7] प्रयोजनं इष्टप्राप्तिरनिष्टपरिहारो वा । तदुभयं प्रवृत्तिनिवृत्तिसाध्यमेव इति प्रवृत्तिनिवृत्तिप्रयोजनमेव लोके शब्दप्रयोगमुत्पश्यामः । त[8]दिह वेदान्तानामपि प्रवृत्तिनिवृत्तिप्रयोजनपर्यवसानमेव प्रामाण्यं युक्तम् । अन्यथा अध्ययनविधिपरिगृहीतानां अखिलोपनिषच्छब्दानां आनर्थक्यमन्याय्यमापद्येत ।

ननु यथा विस्मृ[9]तहस्तविन्यस्तस्य[10] काञ्चनभूषणस्य मन्दान्धकारारोपितरशनाविषधरस्य च वस्तुस्वरूपसत्तामात्रसमधिगमेन करतलविनिहितकाञ्चनप्राप्तिं आरोपितसर्पदर्शनसमुद्भूतभयनिवृत्तिं च उपलभामहे, तथेहापि प्रवृत्तिनिवृत्तिव्यवधान-

१. A: निर्दिष्ट ; E: निर्मिष्ट ; E has a corrupt reading, most of the words being mis-spelt
२. B omits बन्ध ; E: खण्ड
३. A: चेत्
४. A E omit इदम्
५. B: आलोच्यते
६. B: अनपेक्षया ; A: अनपेक्ष
७. A omits च
८. E: तर्हि for तदिह
९. B: विस्तृत
१०. E: विन्यस्तकाञ्चन

मनपेक्ष्य [साक्षादेव[१] विज्ञानमात्रनिमित्तं वेदान्तेषु च[२] निखिलसंसार[३]निवृत्तिनिरतिशयानन्दब्रह्माविर्भावलक्षणं[४] प्रयोजनमस्तु ।

नेति ब्रूमः, लोकेऽपि हस्तगतविस्मृतसुवर्णावाप्ति[५]विषयैक[६]वाक्यप्रयोगस्यापि प्रवृत्तिनिवृत्तिप्रयोजनत्वात् । तथा हि—'त्वत्पाणितलसंलग्नमेव काञ्चनवरभूषणम्, अतो मा शुचो[७] मा सन्तापं कार्षीः' इति प्रलापसन्तापादिनिवृत्तिप्रयोजनमिदं वाक्यम् । तथा 'पुरस्ते[८] रज्जुखण्डकमेव न विषधरः, अतो मा भैषीः, गच्छ, सुखं आस्व' इत्यादि प्रवृत्तिनिवृत्तिप्रयोजनं एव[९] तद्वाक्यम् । तदिह वेदान्तानामपि प्रयोजनपर्यन्तं प्रामाण्यमङ्गीकुर्वद्भिः आश्रयणीयमेव क्रियाव्यवधानेनैव ब्रह्मणि प्रामाण्यम् ।

भवेन्नाम लोके प्रवृत्तिनिवृत्तिव्यतिरेकेणापि प्रयोजनपर्यन्ता शब्दस्य[१०] प्रवृत्तिः । न तथा वेदान्तानां संभवति[११]; समधिगतसर्वात्म[१२]भावस्यापि पुरुषस्य यथापूर्वमेव संसारित्वोपलम्भात् । अपि च वेदान्तवाक्यजनितविज्ञानमात्रेण कृतकृत्यता अशक्या अध्यवसातुम्; श्रवणोत्तरकालमपि मनननिदिध्यासनयोः कर्तव्यतया विधीयमानत्वात् । तस्मात् "आत्मा वा अरे द्रष्टव्यः" (Bṛh. II. 4. 5) "तत्त्वमसि" (Ch. VI. 8. 7) "अहं ब्रह्मास्मि" (Bṛh. I. 4. 10) इत्यादिब्रह्मात्मत्वोपासनविधिनान्तरीयकमेव शब्दस्य[१३] ब्रह्मणि प्रामाण्यम्—इति केषाञ्चिदभ्युपगमः ।

---

१. E omits the portion within brackets, nearly a page
२. B omits च
३. A: संसारेषु
४. B. लक्षणप्रयो
५. B: सुवर्णादिविषयक
६. A: विषयवाक्य
७. B wrongly reads शोचः
८. A: पुरतःस्थितरज्जुखण्डमेव which gives no correct sense
९. B: एतद्वाक्यम्
१०. B: शब्दप्रवृत्तिः
११. B: संभवः
१२. B: सर्वानुभव
१३. B places शब्दस्य after ब्रह्मणि

तदेतन्न विपश्चितां चेतसि चमत्कारमाविष्करोति । "ब्रह्म वेद ब्रह्मैव भवति" (Muṇḍ. III. 2. 9) "ब्रह्मविदाप्नोति परम्" (Taitt. II. 1. 1) इत्यादिश्रुतिशतेन ब्रह्मात्मभावलक्षणस्य मोक्षस्य केवलज्ञानमात्र[1]निमित्तत्वाभिधानात्, "तरति शोकमात्मवित्" (Ch. VII. 1. 3) "भिद्यते हृदयग्रन्थिः" (Muṇḍ. II. 2. 8) "भूयश्चान्ते विश्वमायानिवृत्तिः" (Śvet. I. 10) "मायामेतां तरन्ति ते" (Bh. Gītā. VII. 14) इत्यादिश्रुतिस्मृतिशतेभ्यश्च संसारस्य मायामयत्वानुवादेन सम्यग्ज्ञाननिवर्त्यतायाः साक्षादेवाभिधीयमानत्वात्, लोके[2] च स्वप्नमायामरीच्युदकगन्धर्वनगरादिवि]भ्रमस्य वस्तुतत्त्वसाक्षात्कारेण निवर्त्यमानत्वोपलम्भात्, ब्रह्मण्युपासनादिक्रियाकलापस्य "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (Kena. 4) इत्यादिना प्रतिषिध्यमानत्वाच्च क्रिया[3]दिनिरपेक्षमेव वेदान्तानां ब्रह्मणि प्रामाण्यम्—इति निश्चिनुमः ।

अपि च अपवर्गोऽपि स्वर्गादिवत् क्रियासाध्यश्चेदभ्युपगम्येत, तदा तद्वदेव अनित्यत्वमप्यनिवारितमापद्येत । 'स्यादेतत्—"न स[4] पुनरावर्तते" (Ch. VIII. 15. 1) इत्यपुनरावृत्तिश्रुतिविरोधात् अनित्यत्वानुमानाप्रवृत्तिः' । नैतत्सारम् । उपासनाविधिपरत्वात् अपुनरावृत्तिवाक्यस्य, अन्यपरस्य शब्दस्य प्रमाणान्तरविरोधे सति देवताधिकरणन्यायेनापि प्रामाण्यानुपपत्तेः,[5] तेषामिह न पुनरावृत्तिः "इमं मानवमावर्तन्नावर्तन्ते" (Ch. IV. 15. 6) इति । [6]अत्र 'इमम्, इह' इति विशेषणेन एतत्कल्पा[7]वधिकानावृत्तिप्रतिपादनात्, "तद्यथैवेह कर्मचितो लोकः क्षीयते" (Ch. VIII. 1. 6) इत्यादिश्रुत्यैव क्रियाफलस्य स्वर्गस्य अविशेषेण अनित्यत्वप्रतिपादनाच्च न अपवर्गः स्वर्गादिवत् क्रियासाध्योऽध्यवसातव्यः ।

---

१. B omits मात्र
२. B: लोकेऽपि च
३. B omits आदि
४. B: न च ; A E: न च पुनरावृत्तिश्रुतिविरोधात्
५. A erroneously corrects it into प्रामाण्यापत्तेः
६. B: अत्रैवमिममिह
७. B: कल्पाधिक

यत्तूक्तम्—प्रवृत्तिनिवृत्तिप्रयोजनव्यतिरेकेण शब्दप्रयोगानुपपत्तिः— इति, तत्[1] निखिलशब्दप्रयोगानुसन्धानाक्षमत्वात् उत्प्रेक्षितम्, यावता 'रज्जुरियं नायं सर्पः' 'हस्तगतमेव ते सुवर्णम्' इत्यादिशब्दानां केवलवस्तुमात्रावबोधनेन इष्टानिष्टप्राप्तिपरिहार[2]पर्यवसानं दृश्यते। न च वाच्यम्—तत्रापि सुवर्णापायनिमित्तप्रलापादिनिवृत्तिः सर्पादिप्रतिबन्धनिवृत्त्या गमनादिप्रवृत्तिश्च प्रयोजनम्—इति; यतः सर्पादिदर्शन[3]संजातसन्त्रासस्य सन्त्रासनिवर्तकत्वेनैव वाक्यमर्थवत्, न अपरं प्रयोजनमपेक्षते; पश्चादुपलभ्यमाना अपि गमनादिप्रवृत्तिः प्रयोजनान्तरनिमित्तैव, न वाक्यसामर्थ्यकृता; तथा हस्तगतविस्मृतसुवर्णबोधन[4]वाक्येऽपि सुवर्णापायनिमित्तदुःखनिवृत्तिः तदवाप्तिनिमित्तहर्षश्च प्रयोजनम्; प्रलापसन्तापादि[5] तु स्वयमेव हेत्वभावात् निवर्तते। एवमेव वेदान्तवाक्यानामपि वस्तुतत्त्वबोधनमात्रेण निखिलसंसारनिवृत्ति[6]निरतिशयानन्दब्रह्मभावाविर्भावनिमित्तत्वोपपत्तेः न क्रियाव्यवधानकल्पनावकाशः। न च अवगततत्त्वस्यापि संसारोपलब्धिः, ब्रह्मात्मभावविरोधात्, यस्य तु उपलब्धिः नासाववगततत्त्वः[7] इति।

यदपीदमुक्तम्—श्रवणोत्तरकालमपि मनननिदिध्यासनयोः कर्तव्यतया विधानात् न वस्तुस्वरूप[8]मात्रविज्ञानपर्यवसानं वेदान्तानाम्—इति, तदपि शब्दतात्पर्यपर्यालोचनाक्षमैः उत्प्रेक्षितम्; यस्मात् 'आत्मनस्तु कामाय सर्वं प्रियं भवति" (Bṛh. II. 4. 5)[9] इत्यात्मन एव सर्वस्मात् समीहिततमत्वप्रतिपादनेन विज्ञेयत्वमभिधाय, "एतावदरे[10] खल्वमृतत्वम्" (Bṛh. IV. 5. 15) इत्यात्मविज्ञानेन कृत-

---

१. E omits तत्
२. E omits परिहार
३. B: सर्पादिदर्शनसञ्जातं त्रासस्य निवर्तकं सर्पादिनिवर्तकत्वेनैव etc.
४. B: बोधक
५. A: पादिस्तत्
६. B: निवृत्तिः अतिशयानन्द etc.
७. Cf. Śaṅkara's Bhāṣya on Br. Sū. I. i. 4
८. E omits स्वरूप
९. B adds आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति
१०. B: एताव......दमृत

कृत्यतामुक्त्वा, तच्च अमृतत्वप्राप्तिसाधनं आत्म[1]ज्ञानम् "आत्मा वा अरे द्रष्टव्यः" (Bṛh. II. 4. 5) इत्यनूद्य, तज्ज्ञानसाधनत्वेन "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (Bṛh. II. 4. 5) इति श्रवणमनननिदिध्यासनानां अविशेषेण ज्ञानसाधनत्वे[2]-विधानात् न ज्ञानोत्तरकालभाविता मनननिदिध्यासनयोः ।

अपि च[3] वेदान्तानां क्रियाविधिपरत्वे सति न वस्तुनि प्रामाण्यसिद्धिः । न वस्तुपरत्वे [[4]च क्रियाविधिपरत्वम् । न चोपासन[5]क्रियाविधिनान्तरीयकतया तदन्यथानुपपत्त्या वा वस्तुतत्त्व]सिद्धिराशङ्कनीया, शब्दप्रमाणावगते तु ब्रह्मात्मत्वे[6] सकलभोक्तृभोक्तव्यभोगप्रमातृप्रमाणप्रमेयकर्म[7]कर्तृकार्यग्रन्थिशैथिल्यात् उ[8]पास्योपासकादिभावानुपपत्तेः । नापि उपासनाविधानान्यथा[9]नुपपत्त्या उपास्यतत्त्वसिद्धिः, योषि[10]-दग्न्यादिवदारोपितरूपेणाप्युपासनासम्भवात् । तस्मात् न प्रमाणप्रयोजनवती इयं क्रियाविधिव्यवधानेन वेदान्तानां ब्रह्मणि प्रामाण्यकल्पना । किं तु साक्षादेव ब्रह्मणि शब्द[11]ः प्रमाणम् । तस्मा[12]त् न ब्रह्मप्रतिपादकवाक्यं क्रियागन्धमपि संस्प्रष्टुमीष्टे इति सिद्धम् ।

इति तत्त्वशुद्धौ क्रियानपेक्षप्रामाण्यप्रतिपादनप्रकरणम् ॥

---

१. A: आत्मानं
२. B: त्वेन विधानात्
३. A B omit च
४. E omits the part within brackets
५. A wrongly gives उपाधिक्रिया
६. B: ब्रह्मात्मतत्त्वे
७. A omits कर्तृ
८. A omits उपास्य
९. B: विधानानुपपत्त्या
१०. B. योषा
११. A: शब्दाः
१२. A omits तस्मात्

## ॥ अखण्डवाक्यार्थनिरूपणं त्रयोदशम् ॥

यत्तत्त्वमागमविदोऽखिलवेदसारं
सोऽयं पुमानिति निदर्शनतोऽनवद्यम् ।
जीवस्य तात्त्विकमखण्डमुशन्ति रूपं
तस्मै नमो भगवते पुरुषोत्तमाय ॥

इदमिदानीं चिन्त्यते[1]—किं 'सोऽयं देवदत्तः' इत्यादिलौकिकवाक्यं विशिष्टार्थपर्यवसायि, किं वा अखण्डैकरसार्थपर्यवसायि?—इति । तत्र अनेकपदसमुदायात्मकत्वात् वाक्यस्य, पदानां अपुनरुक्तार्थानामेव एकस्मिन् वाक्ये सहप्रयोगसंभवात्, वाक्यार्थस्य च अन्विता[2]नेकपदार्थकत्वात्, 'सोऽयम्' इत्यादिवाक्यस्यापि अपुनरुक्तार्थानेकपदसमुदायात्मकस्य अन्वितानेकपदार्थात्मके वाक्यार्थे पर्यवसानं युक्तमाश्रयितुम् । तदयं प्रयोगः—विवादगोचरापन्नं 'सोऽयम्' इत्यादिवाक्यं अन्वितानेकपदार्थात्मकवाक्यार्थपर्यवसायि भवितुमर्हति, बुद्धिपूर्वकवाक्यत्वात्, [[3]गवानयनादिवाक्यवत्—इति । न च प्रकृष्ट[4]प्रकाशश्चन्द्रः इत्यादिवाक्येषु अनैकान्तिकता आशङ्कनीया, तत्रापि[5] प्रकर्षप्रकाशगुणविशिष्टस्यैव चन्द्रस्य वाक्यार्थत्वाभ्युपगमात्[6] । न च वाच्यम् 'किं] गवानयनादिवाक्यस्य [क्रिया[7]कारकाभिधायित्वात् एवंविधवाक्यार्थपर्यवसायित्वम्, किं वा बुद्धिपूर्वकवाक्यत्वात्, इति सन्दिग्धं प्रयोजकम्' इति ; यतो 'नीलं सुगन्धि महदुत्पलम्' इत्यादिवाक्येषु] क्रियाकार[8]कानभिधायिष्वपि पश्यामोऽन्वितानेकपदार्थात्मकवाक्यार्थपर्यवसानम् ।

---

१. B: आलोच्यते
२. B: अन्वितपदार्थात्मकत्वात्
३. E omits the portion within brackets
४. A omits प्रकृष्ट
५. B omits तत्रापि
६. B: अवगमात्
७. The portion within brackets is omitted in E
८. B wrongly reads कारकाभिधायि

स्यान्मतम्—'सोऽयम्' इति कालद्वयोपाधिपरामर्शेन तदुपलक्षितदेवदत्तस्वरूपमेव पदत्रयेणापि प्रतिपाद्यते, कालद्वयविशिष्टवस्तुप्रतिपादनासंभवात्। तथा हि; 'सः' इति परोक्षकालविशिष्टदेवदत्तस्वरूपं प्रतिभाति ; 'अयम्' इत्यपरोक्षकालविशिष्टस्वरूपम् ; न हि रूपरसाभ्यामिव कालद्वयेन एकस्य विशेष्यत्वमवकल्पते, वर्तमानावर्तमानकालयोः अतद्भावभावित्वेन शुक्लपक्षकृष्णिम्नोरिव परस्परविरोधात्—इति। तदसत्। कालद्वयस्य युगपत् एकस्मिन् अन्वयासंभवेऽपि पर्यायेण शुक्लनीलयोरिव एकद्रव्ये संभवत्येव सम्बन्धः। अन्यथा पदत्रयमपि देवदत्तस्वरूपमात्रपर्यवसायि चेत्, तस्यैकेन पदेन लभ्यत्वात् पदान्तरप्रयोगः अनर्थकः स्यात्। न खलु हस्तकरशब्दयोः एकस्मिन् वाक्ये सहप्रयोगो दृष्टः।

अथ "'सोऽयम्' इति पदद्वयस्य प्रवृत्तिनिमित्तभेदात् लक्षणया एकवस्तुपर्यवसानाच्च न पर्यायत्वप्रसङ्गः, नापि नानारसात्मकवाक्यार्थपर्यवसानम्" इति मतम्, तदपि नातिचतुरश्रम्, लक्षणाहेत्वभावात्। मुख्यार्थानुपपत्तौ हि लक्षणा समाश्रीयते। न चेह मुख्यार्थपरिग्रहे काचित् अनुपपत्तिरस्ति ; पर्यायेण कालद्वयविशिष्टस्य पदद्वयेन एकत्वप्रतिपादनसंभवात्। तस्मात् 'सोऽयम्' इत्यादिलौकिकवाक्यं विशिष्टार्थपर्यवसायि इति वेदान्तपदसमन्वयस्य अखण्डैकरसार्थपर्यवसानमसहमानैः प्रत्यपादि।

अत्राभिधीयते। 'सोऽयं देवदत्तः' इत्यादिवाक्यं अखण्डैकरसार्थपर्यवसायि भवितुमर्हति, अन्यथा वाक्यस्य प्रामाण्यानुपपत्तेः। तथा हि। इदमत्र विवेक्तव्यम्—किं अस्मिन् वाक्ये देवदत्तस्वरूपमात्रं प्रतिपाद्यम्, [आहोस्वित् देवदत्तगतैक्यम्, उत देवदत्तस्य कालद्वयसम्बन्धः, किं वा परोक्षापरोक्षकालद्वयविशिष्टयोरैक्यम्?—इति। यदि देवदत्तस्वरूपमात्रं अत्र प्रतिपाद्यम्,] तर्हि तस्यै-

१. A: पदार्थत्रयेणापि
१. B: सिद्धत्वात्
३. A: भेदलक्षणया
४. A wrongly reads कस्मिन्
५. E omits the part within brackets
६. B: विशिष्टद्वयैक्यम्

केन पदेन लभ्यत्वात् पदान्तरप्रयोगवैयर्थ्यम्, प्रत्यक्षादिसिद्धत्वाच्च न शब्दापेक्षा। अथ देवदत्तस्यैक्यम्। तस्यापि प्रत्यक्षादिसिद्धत्वात् न शब्दापेक्षा, नाप्यनेकपदप्रयोगः। अथ देवदत्तस्य कालद्वयसम्बन्धः। तदा वर्तमानकालसम्बन्धिन एव अवर्तमानकालसम्बन्ध इति न सिध्येत्; उभयकालसम्बन्धिन एकत्वे प्रमाणाभावात्, वाक्यस्य च देवदत्ते[1] कालद्वयसम्बन्धमात्रोपक्षयात्। अथ उभयकालविशिष्टयोरैक्यम् इत्यभिधीयते, तदपि न प्रतीतिपथमवतरति; वर्तमानावर्तमानकालयोरिव तद्विशिष्टयोरपि परस्परसम्बन्धानुपपत्तेः। स्यान्मतम्—यथा रूपरसयोः [परस्परसम्बन्धाभावेऽपि[2] तदुभयसम्बन्धि वस्त्वेकमेव, तथा इहापि कालयोः परस्परसम्बन्धाभावेऽपि कालद्वयसम्बन्धि वस्त्वेकमेवास्तु—इति। नैतत्सारम्। रूपरसयोः एककालोपाधौ अतद्भावभावित्वनियमाभावात्, स्यादविरोधेन युगपदेकवस्तुविशेषणत्वम्। कालयोः] पुनः एकदेशकालोपाधौ भावाभावयोरिव अतद्भावभावित्वनियमात्, न तावत् युगपदेकवस्तुविशेषणत्वसंभवः। नापि 'पर्यायेण कौमारवार्धकयोरिव एकवस्तुविशेषणत्वसंभवः' इति वाच्यम्, तत्र कौमारवार्धकधर्मद्वयसम्बन्धव्यतिरेकेण तदुभयसम्बन्धिवस्तुनः प्रत्यभिज्ञया एकत्वनिश्चयात्[3] कौमारवार्धकयोः पर्यायेण एकवस्तुसम्बन्धनिश्चयो युक्तः। इह पुनः एकस्य कालद्वयसम्बन्ध[4]निश्चयव्यतिरेकेण उभयकालसम्बन्धिवस्तुनः एकत्वनिश्चा[5]यकप्रमाणाभावात् एकस्य पर्यायेण कालद्वयसम्बन्ध[6] इति निश्चयो दुःसम्पादः। तस्मात् [7]विधिमुखेन वाक्यस्य कस्मिंश्चिदर्थे प्रामाण्यानुपपत्तेः, अबाधितप्रतीतिजनकत्वेन प्रामाण्याच्च, कालद्वयनामधेयोपाधिद्व[8]यसम्बन्धनिमित्तदेवदत्तगतानेकत्वभ्रान्तिनिवर्तनेन देवदत्तस्वरूपसमर्पकतया प्रामाण्यं वक्तव्यम्। तथा च सति 'सोऽयम्' इति

---

१. B: देवदत्तकालद्वय
२. The portion within brackets is missing in both A and E
३. A: यत्वात्
४. A: सम्बन्धि
५. A: निश्चयाय
६. A: सम्बन्धनिश्चयो
७. B: विविधमुखेन, a mistake
८. A E omit द्वय

पदद्वयसामानाधिकरण्येन उभयकालविशिष्टद्वयान्वयप्रतीतौ[1] तदन्वयविरोधे च सञ्जाते वाच्यैकदेशविरुद्धांशद्वयपरित्यागेन उभयत्र वाच्यगताविरुद्धदेवदत्तस्वरूपमात्रे पदद्वयस्य लक्षणावृत्तिराश्रीयते, मुख्यार्थानुपपत्तौ लक्षणासमाश्रयणस्य न्याय्यत्वात्। न च उपाधिद्वयसम्बन्धकृतानेकत्वभ्रान्तिनिवर्तनेन देवदत्तस्वरूपसमर्पणं एकेन पदेन लभ्यते, लक्षणानिमित्तत्वात् उपाधिविनिर्मुक्तस्वरूपसमर्पणस्य, लक्षणायाश्च पदार्थयोः[2] परस्परविरोधकृतत्वात्, विरोधस्य च अन्वयप्रतीतिकृतत्वात्, अन्वयप्रतीतेश्च पदानां सामानाधिकरण्यनिमित्तत्वात्[3], सामानाधिकरण्यस्य च अनेकपदगामित्वात्[4] इति।

ननु अवर्तमानकालविशिष्टस्य वर्तमानकालसम्बन्धाभावेऽपि तत्कालोपलक्षितस्य एतत्कालसम्बन्धो न विरुध्यते ; ततश्च एकपदलक्षणयापि[5] विरोधपरिहारसंभवे सति उभयपदलक्षणा न युक्ता आश्रयितुम्, मुख्यार्थासंभवकृतत्वात् लक्षणायाः। नैतत्सारम्। अन्यतरकालेन हि देवदत्तस्वरूपमेव लक्ष्यते, न अन्यतरकालविशिष्टरूपम्; वर्तमानकालविशिष्टरूपेण देवदत्तस्य अतीतकालेन सम्बन्धाभावात्; असति[6] च सम्बन्धे लक्षणानुपपत्तेः। स्वरूपमात्रं पुनः देवदत्तस्य उभयकालसम्बन्धि इति युज्यत एव कालद्वयेनापि स्वरूपमात्रलक्षणा। [7]विपक्षेऽपि समानो दोषः, वर्तमानोपलक्षितदेवदत्तस्वरूपस्य अवर्तमानकालेन सम्बन्धाभावात्, [अन्यतरकालोपलक्षितस्यैव][8] अन्यतरकालोपलक्षणं इति नियमानुपपत्तेः, उभयकालोपलक्षितस्वरूपं एकमेवेति न लभ्यते इति। सत्यम्; उपलक्षितरूपयोः अन्योन्यसम्बन्धाभावेऽपि विशिष्टद्वयान्वयप्रतीतिसमये तद्गत[9]स्वरूपस्य उभयकालसम्बन्धप्रतीतेः, उपलक्षणसमयेऽपि स्वरूप-

१. A: उपाय, which is wrong
२. A omits अन्वय
३. A: सत्वात्
४. A: गामित्वमिति
५. A omits अपि
६. A: अथ च संबन्धे
७. A. पक्षोऽपि ; in B this part is missing up to यत्तक्तं in the next para
८. E omits this
९. A: तद्गता

मात्रस्य कालद्वयसम्बन्धप्रतीतिबाधाभावात्, विशिष्टयोरेव वाक्यार्थयोः अन्वयविरोधेन तयोरेव परस्परं अन्वयप्रतीतिबाधात्, उभयकालोपलक्षितस्वरूपमात्रस्य एकत्वनिश्चये न काचिदनुपपत्तिः।

यत्तूक्तम् 'सोऽयम्' इत्यादिवाक्यं बुद्धिपूर्वकवाक्यत्वात् विशिष्टार्थनिष्ठं[1] इति, तत् वाक्यस्य विधिमुखेन प्रामाण्यसंभवे सति सिध्येत्[2]। इदं तु उपाधिद्वय-सम्बन्धनिमित्त[3]देवदत्तगतभेदभ्रान्तिनिवर्तनेन तत्स्वरूपमात्रे पर्यवस्यति, अन्यथा वाक्यस्य प्रामाण्यानुपपत्तेः, इति अर्थापत्तिबाधित[4]त्वात् कालात्ययापदिष्टम्।

अनेकान्तश्च[5] हेतुः[6], 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादेः एकरसार्थपर्यवसानात्। तथा हि—प्रश्नोत्तरमिदं वाक्यम्। 'अस्मिन् ज्योतिर्मण्डले कश्चन्द्रो नाम?' इति कश्चित् केनचित् पृष्टः प्रतिवदति 'प्रकृष्टप्रकाशश्चन्द्रः' इति। तत्र हि चन्द्र[7]प्रातिपदिकाभिधेयमेव पृष्टम्, न तद्गुणाः, नापि तस्य गुणसम्बन्धः। ततश्च यावदेव हि पृष्टं तावदेव प्रतिवचनेनापि प्रतिपादनीयम्; अन्यथा अन्यत्[8] पृष्टं अन्यदेव प्रतिपाद्यते इति प्रश्नप्रतिवचनयोः असङ्गतिः स्यात्। अतः 'प्रकृष्टप्रकाशः' इति प्रकर्ष[9]गुणप्रकाश-सामान्याभ्यां प्रकर्षगुण[10]प्रकाशसामान्यव्यक्ति[11]भूतं चन्द्रद्रव्य[12]मेव लक्ष्यते; प्रकर्षगुणवि-शिष्टस्य प्रकाशसामान्यविशिष्टस्य वा उभयविशिष्टस्य वा चन्द्रप्रातिपदिकाभिधेय-त्वानुपपत्तेः। अतोऽत्रापि पदद्वय[13]लक्षणाश्रयणेन चन्द्रप्रातिपदिकाभिधेयमात्रे वाक्यं

---

१. A: विशिष्टनिष्ठं
२. B: साध्येत
३. E: सम्बन्धद्वय
४. B E: बोधित
५. B: अनैकान्तिकश्च
६. *i. e.* बुद्धिपूर्वकवाक्यत्वात्, mentioned earlier
७. E omits चन्द्र
८. B omits अन्यत् पृष्टम्
९. A B omit प्रकर्षगुण
१०. A omits गुण
११. B: वृत्ति
१२. A: चन्द्रमेव
१३. A E: पदद्वयलक्षणेन

पर्यवस्यति इति सिद्धं अखण्डार्थविषयत्वम् । यद्यप्युपलक्षितदेवदत्तस्वरूपे चन्द्र-प्रातिपदिकाभिधेये [च[1] गुणगुण्याद्यनेकरसत्वं दृश्यते, तथापि तत् प्रमाणान्तरसिद्धं न शब्द]प्रमाणपरिप्रापितं इति वाक्यस्य अखण्डार्थे एव पर्यवसानं इति सिद्धम् ।

इति तत्त्वशुद्धौ अखण्डवाक्यार्थनिरूपणप्रकरणम् ॥

१. E omits the portion within brackets

## ॥ वैदिकाखण्डवाक्यार्थनिरूपणं चतुर्दशम् ॥

सत्यं ज्ञानमनन्तमद्वय[1]सुखं ब्रह्मेति वेदान्तगीः
हित्वा[2] वाच्यमखण्डमेकरसकं यं [3]लक्षयत्यादरात् ।
सत्यं तत्त्वमसीति गीरवितथा प्रत्यक्[4]तया लक्षयेत्
तं वन्दे परमं परायणमहं नारायणं सादरम् ॥

संप्रति विचार्यते—"सत्यं ज्ञानमनन्तं ब्रह्म" (Taitt. II. 1. 1) इत्यादिवाक्यं विशिष्टार्थनिष्ठम्, आहोस्वित् अखण्डैकरसार्थनिष्ठम्[5] ?—इति। तत्र[6] "सत्यं ज्ञानमनन्तम्[7]" इति सामानाधिकरण्योपलम्भात्, सामानाधिकरण्यस्य च लोके विशिष्टाखण्डार्थयोः अविशेषेण दृष्टत्वात्, किं प्रकृष्टप्रकाशवत् अखण्डैकरसविषयं[8] सत्यादिपदसामानाधिकरण्यम्, किं वा नीलोत्पलादिवत् विशिष्टार्थविषयम्, इति गवेषणायाम्, अखण्डार्थपरत्वे लक्षणाकक्षीकारप्रसङ्गात्, लक्षणाहेतोः अत्र लोकप्रसिद्धस्य अनुपलम्भात् लक्षणोपादानानुपपत्तेः, मुख्यार्थ[9]परिग्रहे[[10]ण विशिष्टार्थविषयं सत्यादिपदसामानाधिकरण्यं इति निश्चिनुमः। तथा हि। लोके शब्दस्य मुख्यार्थपरिग्रहानुपपत्तौ लक्ष्य[11]लक्षणयोश्च असाधारणसम्बन्धे सति वाक्यस्थपदानां अन्विताभिधायित्व[12]सिद्धये प्रमाणान्तरसिद्धानेव कतिपयपदार्थान् वाक्यार्थान्वययोग्यानेव

---

१. A: अव्ययसुखम्
२. A E: गीत्वा
३. E: प्रत्यक्षयेत्या
४. E: प्रत्यक्षया
५. B: पर्यवसायीति
६. E omits तत्र
७. A: अनन्तं नित्यमिति ; B: अनन्तं ब्रह्मेति
८. B: अखण्डविषयम्
९. A E read अपरिग्रहेण
१०. The portion within brackets is missing in B. Instead it reads मुख्यार्थपरिग्रहे हेतोरसिद्धत्वात् कतिपयपदार्थस्य वाक्यार्थान्वयायोग्यस्य लोके लक्षणा दृष्टा
११. E: लक्षणायाश्च
१२. A: भिधासिद्धये

लक्षयन्ति पदानि इति दृष्टम् ।] न च एकमपि कारणमत्र[1] सत्यादिपदलक्षणायां वयं[2]मुपलभामहे । न तावत् मुख्यार्थपरिग्रहानुपपत्तिः ; सत्यज्ञानानन्दादिगुणगण-विशिष्टब्रह्मपरत्वे[3]नापि सामानाधिकरण्योपपत्तेः । नाप्यखण्डैकरसार्थवादिपक्षे लक्ष्य-लक्षणसम्बन्धसंभवः[4] ; ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् , निरस्ताशेषविशेषतया ब्रह्मणः सम्बन्धायोग्यत्वा[5]भ्युपगमाच्च । नापि लिलक्षयिषिताखण्डैकरस[6]प्रमाणान्तरसंभवः, तस्य शब्दैकसमधिगम्यत्वाभ्युपगमात् ।

अपि चेदं भवान् प्रष्टव्यः ' किं सत्यादिवाक्यनिविष्टसमस्तपदानां अत्र[7] लक्षणा समाश्रीयते, किं वा कतिपयपदानाम्? ' इति । यद्याद्यविकल्पमङ्गीकुर्याः, तदा लक्षणाक्षेपकाभावात् लक्षणा[8]पि नोदयमधिरोहेत । [अथ[9]]वाक्यस्थपदानां अन्विताभिधानानुपपत्तिः[10], तर्हि तत्रा[11]पि [अ][12]संभवन्मुख्यार्थानामेव पदानां केषाञ्चित् लक्षणामाक्षिपति । सकलपदलक्षणाकक्षीकारे तु[13] पदानां अन्विताभिधानासंभवे सति किं कस्य लक्षणामाक्षिपेत्? । अथ उक्तदोषपरिजिहीर्षया द्वितीयपक्षकक्षीकारः, तदा कतिपयपदलक्षणापरिग्रहेऽपि इतरेषां पदानां अपुनरुक्तानेकार्थान्विताभिधायि-त्वात् न अखण्डैकरसवाक्यार्थसिद्धिः ।

अपि च यदि ब्रह्मणो लक्षणान्येव सत्यादीनि न विशेषणानि इत्यभ्यु-पगमः, तदा अनेकविशेषणविशिष्टस्य एकस्यैव[14] वस्तुनः[15] प्रतिपाद्यमानत्वात् एकेनापि

---

१. B: मात्रम्
२. B omits वयं
३. B: परत्वे सामाना
४. A: सम्बन्धः संभवी
५. B: ब्रह्मणि सर्वसम्बन्धायोग्यत्व
६. B: रसस्य
७. A E omit अत्र
८. A E omit अपि
९. This word seems necessary, though not found in any Ms.
१०. B: अनुपपत्तिभिः, omitting तर्हि
११. A E omit अपि
१२. This negative particle is demanded by the context, as clear from the restatement later in formulating the siddhānta; the words are वाच्यार्थान्वयविरोधे सति.
१३. A E omit तु
१४. A omits एव
१५. B E: वस्तुनोऽप्रतिपाद्यत्वात

लक्षणासिद्धेः न अनेकपदप्रयोगोपयोगं पश्यामः । अथ ब्रह्मणि अनाद्यनिर्वचनीयाविद्याध्यारोपितानृतजडदुःखपरिच्छेदभ्रान्तीनां नित्यसिद्धनिरतिशयानन्दब्रह्मावगमविरोधित्वात् तत्तद्भ्रान्तिनिवर्तनेन सर्वपदानां ब्रह्मसमर्पकत्वात् अर्थवत्त्वम् , इति मन्वीथाः, तदापि वक्तव्यम् ' किं सर्वाणि पदानि एकाकारमेव विज्ञानं जनयन्ति, किं वा[1] प्रतिपदं भिन्नाकाराणि विज्ञानानि जनयेरन् ? ' इति । यद्येकाकारमेव विज्ञानमुदयमासादयेत् , तर्हि तस्य एकेनैव पदेन लभ्यत्वात् पदान्तरप्रयोगानुपयोगः तदवस्थ एव । अथ प्रतिपदं ब्रह्मणि भिन्नाकाराणि विज्ञानानि जायेरन् , तदापि विज्ञेयाकारभेदनिमित्तत्वात् विज्ञानाकारभेदस्य, विज्ञेये[2] ब्रह्मणि अनेकाकारसद्भावप्रसङ्गः ; ततश्च [3]तस्य अखण्डैकरसत्वहानिः । तस्मात् मुख्यार्थपरिग्रहे अनुपपत्त्यभावात् लक्षणाकारणान्तराभावाच्च न लक्षणोपादानेन सत्यादिवाक्यस्य अखण्डार्थपर्यवसानं युक्तम् । अपि तु मुख्यार्थोपादानेन विशिष्टार्थपर्यवसानमेव साधु मन्यामहे । तथा तत्त्वमस्यादिवाक्यस्यापि इति ब्रह्मदर्शनविद्वेषिणो मन्यन्ते ।

[4]तत्र समाधिरभिधीयते । " ब्रह्मविदाप्नोति परम् " (Taitt. II. 1. 1) इति ब्रह्मविज्ञानात् परप्राप्तिमुपदिश्य 'किंलक्षणं ब्रह्म' इति [5]बुभुत्सायां इदमुच्यते " सत्यं ज्ञानमनन्तं ब्रह्म " (Taitt. II. 1. 1) इति । [6]तत्र ब्रह्मेति लक्ष्यनिर्देशः । इतराणि पदानि लक्षणसमर्पणेनैव ब्रह्मणि पर्यवस्यन्ति । न च एकेन पदेन लक्ष्यवस्तुसिद्धिः, प्रतिपदं व्यावृत्तिभ्रान्तिभेदात् । तथा हि—सत्यपदेन ब्रह्मणि मिथ्यात्वभ्रान्तिः निवर्त्यते, ज्ञानपदेन जाड्यभ्रान्तिः, आनन्दपदेन स्वतः परतो वा दुःखसम्बन्धभ्रान्तिनिवृत्तिः, अनन्तपदेन देशतः कालतो वस्तुत[[7]श्च अवच्छेदभ्रान्तिनिवृत्तिः] क्रियते इति ।

१. E omits किं वा
२. A : विज्ञेयब्रह्मणि
३. B : एतस्य
४. B: अत्र समाधीयते
५. E: ब्रह्मलक्षणबुभुत्सायां
६. B: तद्ब्रह्मेति
७. E omits the portion within brackets

यदुक्तम्—सर्वपदानां एकाकारविज्ञानजनकत्वे पर्यायत्वात् अनेकपदप्रयोगानुपयोगः, अनेकाकारविज्ञानजनकत्वे तु विज्ञेयवस्तुन्यपि अनेकाकारप्रसङ्गात् अखण्डैकरसत्वहानिः—इति, तदपि न अस्मत्पक्षं कटाक्षेणापि वीक्षितुं क्षमते; लक्षणासमयेऽपि भिन्नाकारतया जायमानानि अपि विज्ञानानि तत्तद्भ्रान्तिव्यावृत्तिमात्रप्रयोजनत्वात् न ब्रह्मणि स्वं स्वमाकारं प्रमेयतया समर्पयितुमुत्सहन्ते। न च वाच्यम् 'प्रतिपदं जायमानविज्ञानानां ब्रह्मणि स्वस्वाकारसमर्पणनान्तरीयकतयापि विरोधिरूपव्यावर्तकत्वोपपत्तेः उभयं प्रयोजनं अस्तु' इति ; ब्रह्मशब्दार्थमात्रस्य बुभुत्सितत्वात्। न च बुभुत्सितार्थसमर्पणेन अर्थवत्त्वे सति वाक्यस्य अर्थान्तरकल्पना युक्ता। न च सत्यज्ञानादिगुणगणविशिष्टमेव द्रव्यं ब्रह्मशब्देन निर्दिश्यते इति युक्तमाश्रयितुम्; ब्रह्मशब्दस्य स्वार्थप्रक्षेपणेन वस्तुमात्राभिधानसामर्थ्ये अवभासमाने सति अपूर्वसंज्ञापरत्वपरिकल्पनासंभवात्। यदि च ब्रह्मणि गुणगुणिभावेन अवच्छेदमभ्युपगच्छेम, तदा सर्वतोऽनवच्छिन्नवस्तुप्रतिपादकानन्तादिशब्दानां अनन्वयः प्रसज्येत। "यतो वाचो निवर्तन्ते" (Taitt. II. 4. 1) इत्याद्या च ब्रह्मणो वाङ्मानसागोचरत्वश्रुतिः तस्य शब्दवाच्यत्वे सति बाध्येत। "एकधैवानुद्रष्टव्यम्" (Bṛh. IV. 4. 20) "एकमेवाद्वितीयम्" (Ch. VI. 2. 1) "प्रज्ञानघन एव" (Bṛh IV. 5. 13) इत्येवमाद्येकरसत्वप्रतिपादकानि वाक्यानि उपचरितार्थानि कल्प्येरन्। "एतस्मिन्नुदरमन्तरं कुरुते" (Taitt II. 7. 1) "नेह नानास्ति" (Bṛh. IV. 4. 19) "मृत्योः स मृत्युमाप्नोति" (Bṛh. IV. 4. 19) इत्याद्याश्च ब्रह्मणि सर्वप्रकारभेदासंभवश्रुतयो बाध्येरन्।

अपि च ब्रह्मणः तद्गुणानां च स्वयंप्रकाशत्वे सति स्वभावविशेषावधारणात्

१. A omits अपि
२. B E: समस्वेऽपि
३. A omits अपि
४. B: प्रक्षेपेणानवच्छिन्नवस्तुमात्र
५. A E omit संज्ञा
६. B omits वाक्यानि
७. B omits एतस्मिन्

गुणगुणित्वहानिः । ब्रह्मणः अस्वयंप्रकाशत्वे [सति[1] अन्यवेद्यत्वात् अचेतनत्वकार्यत्वादिप्रसङ्गः । न[2] च] स्वयंप्रकाशत्वे सति न शास्त्रवेद्यत्वं इति शङ्कनीयम्, अनिर्वचनीयानाद्यविद्यावरणतिरोधानमात्रस्य आगमसापेक्षत्वात्[3] । नापि ब्रह्म स्वयंप्रकाशमपि स्वात्मनि संवेद्यगुणान् अवभासयति इति साम्प्रतम् ; तेषां तत्प्रकाशस्य च नित्यत्वे सति अन्यवेद्यत्वासिद्धेः ; अनित्यत्वे च तेषां विषयेन्द्रियसंप्रयोग[4]साध्यत्वात् ब्रह्मणोऽपि संसारित्वप्रसङ्गः । तस्मात् अस्मिन् वाक्ये अनन्तादिशब्दानामनन्वयप्रसङ्गात् अनेकश्रुतिविरोधात् युक्तिविरोधाच्च वाच्यार्थसंसर्गसंभवे सति वाक्यस्य प्रमाणत्वाय लक्षणैव समाश्रयणीया ।

यदप्युक्तम्—ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् ब्रह्मणः सर्वप्रकारसंबन्धाभावाच्च लक्ष्यलक्षणसम्बन्धाभावे च[5] सति लक्षणानुपपत्तिः—इति, तदसत् ; ब्रह्मण एव परमार्थसत्यत्वेऽपि प्रातिभासिकस्यापि दृश्यप्रपञ्चस्य यथाप्रतिभासं व्यवहारालम्बन[6]त्वाभ्युपगमात् लक्ष्य[7]लक्षणादिसमस्तव्यवहारोपपत्तेः । ब्रह्मणश्च परमार्थतोऽसङ्गत्वेऽपि[8] तत्त्वमस्यादिवाक्यार्थविज्ञानपर्यन्तं प्रातिभासिकादि[9]सम्बन्धानिराकरणात् अनिर्वचनीयेनापि गुणसामान्यादिना मिथ्याभूतेनापि कलधौतेनेव शुक्तिशकलस्य परमार्थभूतस्य ब्रह्मणो लक्षणोपपत्तेः ।

यदपीदमुक्तम्—प्रमाणान्तरसिद्धस्यैव लोके लक्ष्यत्वात्, ब्रह्मणि च प्रमाणान्तरासंभवात्, लक्षणानुपपत्तिः—इति, तदपि न साधु भाषितम् ; ब्रह्मणः[10] स्वयंप्रका-

---

१. E omits the part within brackets
२. B has a different reading:— न च स्वयंप्रकाशत्वेऽपि स्वतःसिद्धत्वात् अविज्ञेयत्वं समानमिति शङ्कनीयम् ।
३. A: आगमसापेक्ष ; E: मात्रस्यापेक्षत्वात्
४. B: संयोग
५. B omits च
६. B: व्यवहाराभ्युपगमात्, E: आलम्बनाद्यभ्युपगमात्
७. A E omit लक्ष्य
८. A: विसङ्गत्वे
९. A omits आदि
१०. B: ब्रह्मणि

शमानत्वेन प्रमाणान्तरानपेक्षणात् । स्व[१]तः परतो वा लक्षणशब्दव्यतिरेकेण लक्ष्यस्य वस्तुनः प्रतिभासमानत्वमेव लक्षणायां प्रयोजकम् ; न प्रमाणगम्यत्वम् , केवलव्यतिरेकाभावात् ; न हि प्रतिभासमानस्य प्रमाणगम्यत्वाभावेन क्वचित् लक्षणाभावो दृष्टः ।

यच्चेदमवादि — वाक्यस्थपदानां अन्विताभिधानानुपपत्तिः [[२]एव कतिपयपदानां वाच्यार्थान्वयविरोधे सति लक्षणामाक्षिपति, सकलपदलक्षणोपादाने तु किं कस्य लक्षणामाक्षिपेत् ?—इति, अत्र वदामः । न अन्विताभिधानानुपपत्तिः] मुख्यार्थानुपपत्तौ शब्दस्य लक्षणामाक्षिपति, अपि तु वाक्यप्रामाण्यानुपपत्तिः । ततश्च वाक्यं विधिमुखेन यत्र कश्चिदर्थमवबोधयेत् , तत्र अन्विताभिधानमुखेन अवबोधकत्वात् पदानां [[३]अन्विताभिधानानुपपत्तिरेव लक्षणामाक्षिपेत् ; यत्र तदारोपनिवृत्तिमात्रमुखेन कश्चिद[४]र्थमवबोधयेत् , तत्र] निवृत्तिमुखेनैव प्रामाण्यात् , तस्याश्च सकलपदलक्षणामन्तरेण अनुपपत्तेः, वाक्यप्रामाण्यमेव [[५]अनुपपद्यमानं सकलपदलक्षणां] आक्षिपति इति न विशेषं पश्यामः । [१] तत्र सत्यज्ञाना[६]नन्दपदानि सत्यादिसामान्याभिधानमुखेन अनृतजाड्यदुःखविरोधिरूपं व्यक्तिविशेषं लक्षयन्ति, अनन्तमपूर्वमनपरम् इत्यादिशब्दास्तु निश्शेषविशेषप्रतिषेधमुखेन तदेवैकरसं ब्रह्म लक्षयन्ति, इति न किञ्चित् दौस्थ्यमस्ति । [७]तथा तत्त्वमसिवाक्येऽपि तत्पदवाच्यगतपारोक्ष्यांशपरित्यागेन त्वंपदवाच्यगतसंसारित्वपरिच्छिन्नत्वांशपरित्यागेन अद्वितीयप्रत्यक्चैतन्यमात्रमेव लक्ष्यते इति न काचिदनुपपत्तिः । तदयं प्रयोगः—विमतिपदं सत्यादिवाक्यं अखण्डैकरसार्थपर्यवसायि भवितुमर्हति, बुभुत्सितार्थलक्षणवाक्यत्वात् , प्रकृष्टप्रकाशादिलौकिकवाक्यवत्—इति । त[८]था—विवादगोचरापन्नं तत्त्वमसीति सामानाधिकरण्यं एकव-

---

१. E omits स्वतः

२. A E omit the portion within brackets

३. E omits the part within brackets

४. A: कश्चित्तम् , a mistake

५. E omits the part within brackets

६. B E: अनन्त

७. B omits तथा

८. B: तथापि

स्तुनिष्ठं भवितुमर्हति, अकार्यकारणांशांशिविशिष्टस्वरूपद्रव्यवाचिसामानाधिकरण्यात्[1], सोऽयमित्यादिसामानाधिकरण्यवत्—इति। उभयत्र अखण्डैकरसपर्यवसानमन्तरेण वाक्यप्रामाण्यानुपपत्तिः उक्ता। तस्मात् अर्थापत्त्यनुमानाभ्यां वस्तुप्रतिपादकवेदान्तवाक्यानां अखण्डकरसवस्तुपर्यवसानसिद्धिः इति।

इति तत्त्वशुद्धौ वैदिकाखण्डवाक्यार्थनिरूपणप्रकरणम् ॥

---

१. A E: अकार्यकारणांशविशिष्टस्वरूपद्रव्यवाचिपदसामानाधिकरण्यत्वात्।

## ॥ शब्दवृत्तिनिरूपणं पञ्चदशम् ॥

योऽशेषवेदान्तवचोभिरञ्जसा
निरस्तनिश्शेषविशेषविग्रहः ।
उदीर्यते[1] लक्षणयाखिलेश्वरो[2]
नमामि तं यादवकुञ्जरं मुदा[3] ॥

सम्प्रति विचार्यते ' किं[4] सत्यज्ञानादि[5]शब्दैः निर्विशेषं ब्रह्म प्रतिपत्तुं[6] शक्यते, न वा? ' इति । नेति तावत् औपनिषदात्मतत्त्वविज्ञानानाघ्रातचेतसो मसृणधी[7]जन-मनोरञ्जनाय केचिदाचक्षते । तथा हि—शब्दः खलु[8] कश्चिदर्थं प्रतिपादयन् मुख्य-वृत्त्या लक्षणया गौण्या[9] वा प्रतिपादयेत् । मुख्या च द्विविधा, रूढिर्योगश्चेति[10] । तत्र रूढिर्नाम निखिलजनपदेषु अविप्रतिपन्नप्रयोगेण वा गवाद्याकृतिवाचकत्वेन वा वृत्तिः, यथा वृक्षादि[11]शब्दानाम् , यथा वा [12]गवाश्वादिशब्दानाम् । योगो नाम शब्दस्य अन्यत्र क्लृप्तावयवशक्तिद्वारेण कस्मिंश्चिदर्थान्तरे वृत्तिः, यथा पङ्कजादिशब्दस्य सरसिरुहादौ वृत्तिः । तदुभयमिह शब्दस्य ब्रह्मणि न संभविष्यति, तस्य समुत्खात-[13]सकलविशेषसामान्यादिभावाभ्युपगमात् , तत्र[14] शब्दस्य प्रवृत्तिनिमित्तानुपपत्तेः । लक्षणा नाम शब्दस्य मुख्यार्थानुपपत्तौ वाच्यार्थसम्बन्धेन अर्थान्तरे वृत्तिः । सा च त्रिविधा, जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति । तत्र जहल्लक्षणा नाम

---

१. E: उदार्यते
२. B: ईश्वरम्
३. D: सदा
४. D omits किं
५. D: ज्ञानानन्दादि
६. D: संप्रतिपत्तुं
७. D: मन्दधी
८. A omits खलु
९. B omits गौण्या
१०. D omits इति
११. D: आकाशादिशब्दानां
१२. B D: गवादि
१३. D: समस्त
१४. D: तत्र च शब्दप्रवृत्ति etc

इति। तादृशमायुः। पुत्रासः। छान्दसस्त्वसुगागमः[१]। पुत्राश्च यत्र[२] यस्मिन्नायुषि। पितरः[३] भवन्ति। भविष्यदर्थे लट्। भविष्यन्ति। मा इति प्रतिषेधार्थो निपातः रीरिषत इत्याख्यातेन संबध्यते। नः अस्माकम्। मध्या। मध्यशब्दात् सप्तम्येकवचनस्य सुपां सुलुक्[४] इति आकारः। मध्ये। अपर्याप्त एव पुरुषार्थ इत्यर्थः। रिरिषत। रिषतिर्हिंसाकर्मा। मा रिरिषत मा वधिष्ट। तत् आयुः उक्तलक्षणम्। गन्तोः। दृष्टादृष्टोपकारार्थभूतार्थान्[५] प्राप्तुमित्यर्थः॥

**अदितिर्द्यौरदितिरन्तरिक्ष-**
**मदितिर्माता स पिता स पुत्रः।**
**विश्वे देवा अदितिः पञ्च जना**
**अदितिर्जातमदितिर्जनित्वम्[६]॥** ॥ ५ ॥

अनेन गोतमोऽदितेर्देवमातुर्भूमानमाह। अदितिर्द्यौः। कार्यकारणयोरभेदोपचारेण[७] कार्यस्य कारणव्यपदेशः। अदितिप्रभवत्वात् द्यौरदितिरित्युच्यते[८]। तथा अदितिः एवान्तरिक्षम्। अदितिर्माता निर्माता निर्मात्री वृष्टिदानेन सर्वस्य जगतः। स पिता सैव पिता पालयित्री तेनैव कर्मणा सर्वस्य भूतजातस्य। स पुत्रः सैव सर्वथा पुरु बहु त्रायत इति पुत्रः[९] इत्युच्यते। किंच विश्वे देवा अदितिः। देवमातृत्वात् सर्वे देवा अदितिरित्युच्यन्ते। पञ्च जनाः। चत्वारो[१०] वर्णा निषादः पञ्चम इति पञ्च जनाः गन्धर्वादयो वा[११]। ते च अदितिप्रभवत्वादेवमुच्यन्ते। किं बहुना अदितिः जातं अदितिकारणमेव यत्किंचिज्जगति जातम्[१२]। अदितिः जनित्वं अदितिकारणमेव जनिष्यमाणमुत्पत्स्यमानमपि[१३]। सा नः पातु सदा अदितिरिति वाक्यशेषः। नित्यपक्षे अक्षीणा[१४] प्रकृतिरुच्यते। तद्विकारः सर्वमिति योज्यम्॥

**यदस्य कर्मणोऽत्यरीरिचं**
**यद्वा न्यूनमिहाकरम्।**

**अग्निष्टत्स्विष्टकृद्विद्वान्**
**सर्वं स्विष्टं सुहुतं करोतु स्वाहा[१] ॥ ॥ ६ ॥**

[२]यज्ञे कर्मणि वर्तमानानामृत्विजामवश्यं प्रस्मरणसंभवात् प्रस्मरणमूलत्वादूनातिरिक्तस्य तदुत्पत्तौ विगुणं कर्म स्यात् । विगुणाच्च कर्मणः फलाभावः । तदुपशमनार्थमेतत् प्रायश्चित्तम् । यदस्य यागाख्यस्य कर्मणः अत्यरीरिचं अतिरेकं कृतवान् अहम् । यद्वा । वाशब्दः समुच्चये ॥

वायुर्वा त्वा मनुर्वा त्वा [३]

इति यथा । यच्च न्यूनं ऊनम् । हीनमित्यर्थः । इह प्रकृते कर्मणि अकरं कृतवानस्मि । अग्निः । अङ्गतेर्गत्यर्थस्य अग्निः अङ्गयिता गमयिता भूतानां प्राणभूतो रुद्रोऽभिधीयते । स च स्विष्टकृदाख्यः । तथाहि श्रूयते—रुद्रोऽग्निः स्विष्टकृत्[४]—इति । तत् प्रकृतमूनातिरिक्तं स्विष्टस्य कर्ता विद्वान् जानन् । सर्वं कर्म स्विष्टं[५] याज्यया इष्टम् । दुरिष्टमपि[६] स्विष्टं करोतु इति वाक्यशेषः । सुहुतं दर्व्यादिना दुर्हुतमपि सुहुतं करोतु । स्वाहेति प्रदानार्थो निपातः ॥

**आ प्र द्रव हरिवो[७] मा वि वेनः**
**पिशङ्गराते अभि नः सचस्व ।**
**नहि त्वदिन्द्र वस्यो अन्यदस्त्य-**
**मेनांश्चिज्जनिवतश्चकर्थ[८] ॥ ॥ ७ ॥**

अवस्युर्नाम[९] ऋषिः । तस्यार्षम् । आभिमुख्येन प्रद्रव प्रधाव अस्मान् प्रति हे हरिवः अश्ववन् । मा विवेनः वेनतिस्सामर्थ्यात्[१०] लम्बनार्थः । मा विलम्बिष्ठाः । यद्वा कान्तिकर्मा । विगतकामः विगतेच्छः। सामस्तुतीश्च प्रति मा भूः । यद्वा गतिकर्मा । मा विगमः । यावद्यज्ञः समाप्यते तावत्तिष्ठेत्यर्थः[११] । हे पिशङ्गराते[१२] । पिशङ्गस्य रातिर्यस्येति[१३] बहुव्रीहिः । पिशङ्गवर्णस्य सुवर्णादेः रातिरित्यर्थः । अभि नः सचस्व । व्यवहितसंबन्धः । अभिसेवस्वास्मान् । कस्मादेवमभिधीयते[१४] उच्यते ।

हि शब्दो यस्मादर्थे।[1] यस्मात् त्वत् त्वत्तः अन्यत् किंचिदपि हे इन्द्र वस्यः वसुमत्तरः न[2] अस्ति। त्वमेव अतिशयेन धनवानित्यर्थः। यतश्च अमेनांश्चिज्जनिवतः जायावतः करोषि। धनवन्तं हि स्त्री कामयते। तथा च लोकवादः—धनमभिजनमापादयति—इति। तच्च धनं त्वत्प्रसादाल्लभ्यत इत्यभिप्रायः॥

**अथा ते अग्ने समिधा विधेम**
**प्रति स्तोमं शस्यमानं गृभाय।**
**दहाशसो रक्षसः पाह्यस्मान्**
**द्रुहो निदो मित्रमहो अवद्यात्[3]॥ ॥ ८ ॥**

वामदेवस्यार्षम्[4]। निशेष्टौ सामिधेनीषु अस्या ऋचो विनियोगः। अथा अनया। ते। षष्ठी चतुर्थी वा द्वितीयार्थे। द्वितीयैकवचनस्य[5] वा अयादेशः छान्दसत्वात्। हे अग्ने समिधा विधेम परिचराम। लोडर्थे लिङ्। प्रतीत्युपसर्गो गृभाय इत्यनेन संबध्यते। स्तोमं शस्यमानम्। इमं[6] सामिधेनीनां शस्त्राणां च तुल्यधर्मत्वात् शस्त्रधर्मेण क्रियमाणम्। प्रतिगृभाय प्रतिगृहाण[7]। प्रतिगृह्य च नो[8] दहाशसः शंसितॄन् आत्मनः। रक्षसः राक्षसान्। पाहि रक्ष च अस्मान्। कुतः। द्रुहः द्रोग्धुः। निदः निन्दितुश्च सकाशात्। हे मित्रमहः मित्राणां पूजयितः। अवद्यात् गर्ह्याच्च पापात्॥

**एना वो अग्निं नमसो-**
**र्जो नपातमा हुवे।**
**प्रियं चेतिष्ठमरतिं स्वध्वरं**
**विश्वस्य दूतममृतम्[9]॥ ॥ ९ ॥**

वसिष्ठस्यार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। एना अनेन। वः। छान्दसत्वात् द्वितीयैकवचनस्य वसादेशः। त्वामग्निम्। नमसा। अन्ननामेदम्। हविर्लक्षणेनान्नेन निमित्तभूतेन तदुपभोक्तव्यमित्येवमर्थमित्यर्थः। यद्वा नमः स्तोत्रम्[10]।

तेन निमित्तभूतेन । ऊर्जो नपातम्[१] । ऊर्गन्नं बीजलक्षणं रसो वृष्ट्यादिलक्षणः । तस्य नपात् पौत्रः अग्निः । कथम् । ततो ह्योषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एष जायते । इत्येवमग्नेरूर्जः पौत्रत्वम्[२] । आहुवे आह्वयामि । किंलक्षणम् । प्रियं देवानां मनुष्याणां च । चेतिष्ठं अतिशयेन चेतनावन्तम् । अरतिं अलंमतिं[३] पर्याप्तमतिम् । स्वध्वरं[४] शोभनयज्ञम् । विश्वस्य सर्वस्य यजमानगणस्य[५] दूतम् । अमृतं अमरणधर्माणम्[६] । एतदुक्तं भवति । तमाशासमृद्धये आह्वये[७] । स चाहूतो देवान् प्रति दौत्यं[८] करिष्यतीत्यभिप्रायः ।

**ममाग्ने[९] वर्चो विहवेष्वस्तु**
**वयं त्वेन्धानास्तन्वं पुषेम ।**
**मह्यं नमन्तां प्रदिशश्चतस्र-**
**स्त्वयाध्यक्षेण पृतना जयेम[१०] ॥** ॥ १० ॥

विहव्यस्यार्षम् ।[११] संसवे वैश्वदेवे शस्त्रेऽस्य विनियोगः । मम । एकवचनं बहुवचनस्य स्थाने । अस्माकमित्यर्थः । हे अग्ने त्वत्प्रसादात् वर्चः । ब्राह्मं तेजो वर्च इत्युच्यते[१२] । तत् । विहवेषु । विविधमाहूयन्ते शक्रादयो देवा यस्मिन् स विहवः संसव उच्यते । तस्मिन् । अस्माकमेव सोमयागजनितं ब्राह्मं तेजः अस्तु भवतु अस्य यजमानस्य इत्यभिप्रायः[१३]। किं च वयं त्वा त्वां इन्धानाः[१४] दीपयमानाः घृतादिभिः[१५] अन्वहं तन्वं तनुं शरीरमस्मदीयम् । पुषेम । पुष पुष्टौ । पुष्येम । त्वत्प्रसादाद्बहुधनमस्माकं अस्तु इत्यर्थः[१६]। मह्यम्[१७]। बह्वर्थे एकवचनम् । अस्मभ्यम् । नमन्ताम् । नम प्रह्वार्थे[१८]। प्रह्वीभवन्तु[१९] । प्रदिशः प्रकृष्टा दिशः । चतस्रः[२०]। दिक्शब्देनात्र दिङ्निवासिन उच्यन्ते । मञ्चाः क्रोशन्ति इति यथा । सर्वेषामपि भूतानामीश्वरत्वमाशास्यते । किंच त्वया त्वयैव अध्यक्षेण अग्रेसरेण पृतनाः सेनाः प्रतिबन्दिभूताः । जयेम । भवतोऽग्नेः प्रसादादस्मच्छत्रवोऽप्यपहृतवर्चसो निलीनाः शेरतामित्यर्थः ॥

**ऋध्याम स्तोमं सनुयाम वाज-**
**मा नो मन्त्रं सरथेहोप यातम् ।**

**यशो न पक्वं मधु गोष्वन्तरा**
**भूतांशो अश्विनोः काममप्राः[1] ॥ ॥ ११ ॥**

भूतांशो नाम काश्यपपुत्रः अश्विनौ आह। प्रत्यक्षकृतोऽयं मन्त्रः। कुत एतज्ज्ञायते। मध्यमपुरुषयोगात्[2]। ऋधु वृद्धौ। ऋद्धं समृद्धं स्वरसौष्ठवादिना। स्तोमं युष्मद्गुणसंपूर्णम्। कुर्म इति शेषः[3]। न केवलं युष्मत्स्तवमेव कुर्मः। सनुयाम। षणु दाने[4]। दद्म च। वाजम्। वाजमित्यन्ननाम। अन्नं हविः। आकारस्य उपयातं इत्याख्यातेन[5] संबन्धः। नः अस्माकम्। मन्त्रम्। मत्वर्थीयोऽच्प्रत्ययः[6]। ऋगादिमन्त्रैर्मन्त्रवन्तम्। याज्यावन्तमित्यर्थः[7]। सरथा। प्रथमाद्विवचनस्य सुपां सुलुक्[8] इत्याकारः। सरथौ[9]। समानमेकं रथमारुह्येत्यर्थः। इह। इहेति कालः प्रतिनिर्दिश्यते। एतस्मिन् काले। उपयातम्। आख्यातोपसर्गयोर्मध्ये आकारः प्रविशति। उपागच्छतमित्यर्थः। आगतयोश्च युवयोः यशो न। यश इत्यन्ननाम। न इत्युपरिष्टादुपचार[10] उपमार्थीयः[11]। पुरोडाशाद्यन्नमिव। पक्वं पक्वसदृशम्। भोजनयोग्यमित्यर्थः। मधु मधुररसम्। मृष्टतरमित्यर्थः। गोषु। सप्तमीबहुवचनं षष्ठीबहुवचनस्य स्थाने। गवाम्। अन्तः। अन्तःशब्दो मध्यपर्यायः। मध्ये। ऊधसि[12] वर्तमानमित्यर्थः। किं तत्। सामर्थ्यात् पयः। आकारः अप्राः इत्यनेन संबध्यते। भूतांशः। अश्विनोः चन्द्रादित्यरूपयोः कामं[13] प्रकामम्। आप्राः। प्रा पूरणे। आभिमुख्येन पूरयति। प्रवर्ग्यादौ। एतज्ज्ञात्वा तूर्णमुपायातमिति संबन्धः ॥

**अव ते हेळो वरुण नमोभि-**
**रव यज्ञेभिरीमहे हविर्भिः।**
**क्षयन्नस्मभ्यमसुर प्रचेता**
**राजन्नेनांसि शिश्रथः कृतानि[14] ॥ ॥ १२ ॥**

शुनःशेपो यूपे[15] नियुक्तो वरुणमाह। अवेत्ययमुपसर्गः ईमह इत्याख्यातेन संबध्यते। ते तव हेळः। क्रोधनामेदम्। तथा ह्याहुर्ब्रह्मवादिनः—प्रत्यक्षहेळप्रसादा राजानः[16] इत्यादि[17]। पूर्वमयागजनितो योऽस्माकमुपरि रोषः[18] तं रोषं हे वरुण

परितः आच्छादयितः[१] वारिणा तेजसा वा सर्वस्य। नमोभिः स्तुतिभिः। ईमहे इति सिंहावलोकनन्यायेनाख्यातस्यापकर्षः[२]। अवेमहे। अवेत्ययमपेत्यस्य स्थाने द्रष्टव्यः। ईमह इति याच्ञाकर्मान्यत्र[३]। इह तु गत्यर्थः। अपगमयामेत्यर्थः। अव। अस्यापि पूर्ववत् संबन्धः। यज्ञेभिः यज्ञैः। सप्तम्यर्थे तृतीया[४] यज्ञेषु यागेषु। अवभृथेष्ट्यादिषु ईमहे हविर्भिः एककपालादिभिश्च अपगमयामेत्यर्थः। यत एवमतः क्षयन्। क्षि निवासगत्योः। निवसन्। स्वस्मिन् स्थाने गतरोषस्त्रायन्[५] इत्यर्थः। अस्मभ्यं। विभक्तिदोषो माभूदिति[६]। असुर। असुरिति[७] प्राणनाम द्रष्टव्यम्[८]। मत्वर्थीयो रप्रत्ययः मुष्कर इति यथा। प्राणवन्[९] महाबल। प्रचेतः प्रकृष्टप्रज्ञ। उक्तं च भाष्ये—तत्प्रज्ञया स्तौति[१०]—इति। राजन् स्वामिन् सर्वस्य भूतजातस्य। एनांसि पापानि वाङ्मनःकायजातानि इह जन्मनि पूर्वजन्मनि च कृतानि। शिश्रथः[११]। श्रथ शैथिल्ये। शिथिलीकुरु। नाशयेत्यभिप्रायः। पापमूलत्वात् सर्वदुःखानामित्यर्थः।

**उदुत्तमं वरुण पाशमस्म-**
**दवाधमं वि मध्यमं श्रथाय।**
**अथा वयमादित्य व्रते तवा-**
**नागसो अदितये स्याम**[१२] ॥ ॥ १३ ॥

शुनश्शेपस्यार्षम्[१३]। उदित्ययमुपसर्गः श्रथयेत्यनेन संबध्यते। उत्तमं हे वरुण पाशं रज्जुम्[१४]। अस्मत् अस्मत्तः। सिंहावलोकनन्यायेनाख्यातमपकृष्टव्यम्[१५]। उच्छ्रथय उन्मोचय[१६]। अव। अस्य च तेनैवाख्यातेन[१७] संबन्धः। अधमं पाशमवश्रथय। अवेत्ययमधोभावे द्रष्टव्यः। अध एव मोचय। वि। पूर्ववदेवास्य संबन्धः। मध्यमं पाशं तत्रैव विश्रथय। अथ अनन्तरं वयं पाशबन्धान्मुक्ताः[१८] हे आदित्य अदितेः पुत्र व्रते। व्रतमिति कर्मनाम। कर्मणि। तव त्वत्संबन्धिनि वर्तमानाः। अनागसः[१९]। आगः पापमाह आङ्पूर्वाद्गमेः किल्बिषम्[२०]—इति निरुक्तम्। अपापाः सन्तः। अदितये। अदितिरिति पृथिवीनाम[२१]। पृथिव्यै। स्याम। पृथिव्यां चिरं जीवेमेत्यभि-

प्रायः[१]। एवमाख्यानसमयेन[२] इयं मन्त्रस्य योजना। अथवा कश्चिद्यजमान[३] उत्तमाधममध्यमैः पाशैर्बद्धो राजानं वरुणं प्रार्थयते। उत्तमं उत्कृष्टं[४] घोरं हे वरुण पाशं बन्धनहेतुभूतं[५] पापं ब्रह्महत्यादिमहापातकरूपं अस्मत: उच्छ्रथय[६]। अपनयेत्यर्थः। अधममपि पापं अभोज्यभोजनादिनिमित्तमपनय[७]। मध्यममपि पापमुपपातकादिरूपं नाशय। अथानन्तरं त्वया क्षालितसर्वकल्मषाः सन्तो वयं[८] हे आदित्य दीप्तस्वभाव[९] व्रते कर्मणि। तव[१०] त्वद्देवत्ये वर्तमानाः[११]। अनागसः। आगः प्रमादः। प्रमादरहिताः अदितये स्याम अक्षीणाय स्याम। अक्षयं गमिष्याम[१२] इत्यभिप्रायः॥

**सेदग्ने अस्तु सुभगः सुदानु-**
**र्यस्त्वा नित्येन हविषा य उक्थैः।**
**पिप्रीषति स्व आयुषि दुरोणे**
**विश्वेदस्मै सुदिना सासदिष्टिः[१३]॥ ॥ १४ ॥**

वामदेवोऽग्निमाह[१४]। सेत्। सांहितिकः सुलोपः[१५]। सः। इदिति पदपूरणः। हे अग्ने त्वत्प्रसादादस्तु भवतु। सुभगः। भग इति धननामधेयम्[१६]। भजतेः। भज्यते व्यस्यते सर्वार्थिः[१७]। सुदानुः[१८]। सुशब्दः पूजायाम्। शोभनेन दृष्टोपकारेण[१९] धनेन धनवान् सुदानुः। दाभाभ्यां नुः[२०]। सुष्ठु पात्रेभ्यो दाता अस्तु[२१]।

दात्रा पात्रविशेषेण[२२] श्रद्धानतयैव च।
अल्पे[२३] दत्ते बहुगुणं दानस्यावाप्यते फलम्[२४]॥

इति वचनात्। कोऽसौ। यस्त्वा नित्येन अग्निहोत्रादिना[२५] हविषा। य उक्थै[२६] यश्च उक्थैः[२६]। शस्त्राण्युक्थशब्देनोच्यन्ते। इह[२७] तद्वन्तोऽग्निष्टोमादय उच्यन्ते। तैः। पिप्रीषति। प्रीञ् तर्पणे। तर्पयितुमिच्छति। तर्पयतीत्यर्थः। किंच स्वे स्वकीये। आयुषि शतसंवत्सरलक्षणे। शतायुश्च भवन्नित्यर्थः। दुरोणे। दुरोण इति गृहनाम। स्वस्मिन् गृहे। स्थाने स्थितः सन्नित्यर्थः। इदमप्याशास्यम्[२८]। यतो लौकिका आहुः[२९]—स्वगृहे निवासः स्वर्गनिवासः—इति। विश्वा। विश्वशब्दः सर्वपर्यायः[३०]।

सर्वा। इच्छब्दश्चार्थे अनेकार्थत्वान्निपातानाम् । अस्मै यजमानाय। सुदिना कल्याणदिना[१]। सा असत्। पञ्चमो लकारः। अस्त्वित्यर्थः। इष्टिः। इषु इच्छायाम्। इच्छा पुत्रादिविषया। सकलस्त्वामाराधयन्[२] मर्त्यः सर्वथा कार्तार्थ्यमापद्यतामित्यर्थः[३] ॥

**उद्यन्नद्य मित्रमह**
**आरोहन्नुत्तरां दिवम् ।**
**हृद्रोगं मम सूर्य**
**हरिमाणं च नाशय[४] ॥** ॥ १५ ॥

प्रस्कण्वस्यार्षम्[५]। सूर्योऽभिधीयते। स च द्युस्थानः। उद्यन् उदयगिरिशिखरात्[६]। अद्य अस्मिन् काले। मित्रमहः[७] मित्राणां स्तोतॄणां[८] अभिलषितार्थप्रदानेन पूजयितः। अथवा मित्रवदुपकारी[९] महनीयश्च त्वम्[१०]। आरोहन्। आकारो बलवचनः। बलेन स्वेन निहत्य रक्षांसि रोहन्। तथा च श्रूयते—आदित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति[११]—इति। किमारोहन्। उत्तरां उत्कृष्टां पुण्यकृद्भिः[१२] सेव्यमानां अनुपमसुखस्थानं[१३] दिवम्। हृद्रोगं हृदयरोगम्। सर्वदुःखमूलं संतापमित्यर्थः। मम त्वत्परिचारकस्य[१४] संसक्तपरितापहृदयस्य[१५]। सूर्य हे सूर्य। हरिमाणं च हर्तारं च प्रभादीनां। रोगविशेषम्। नाशय निर्मूलय[१६]। प्रदर्शनार्थमिदम्। कुष्ठभगन्दरप्रमेहादीनष्टावपि महारोगान्[१७] नाशय। किं बहुना भाषितेन। भगवन् भक्तवत्सल भवत्प्रसादान्नीरोगो भूयासमित्यर्थः। तथा ह्याप्तवचनम्—

आरोग्यं भास्करादिच्छेन्मुक्तिमिच्छेज्जनार्दनात् ।
ईश्वराज्ज्ञानमन्विच्छेच्छ्रिय[१८]मिच्छेद्धुताशनात्[१९] ॥ इति ॥

**अग्निं वः पूर्व्यं गिरा**
**देवमीळे वसूनाम् ।**

**सपर्यन्तः पुरुप्रियं**
**मित्रं न क्षेत्रसाधसम्**[१] **॥** ॥ १६ ॥

काश्यपस्यार्षम् । अग्निं वः। छान्दसत्वात् एकवचनस्य वसादेशः । त्वाम् । पूर्व्यमिति पुराणनाम । पुराणं नित्यम् । गिरा[२] । गृणातेः स्तुतिकर्मणो रूपम् । गिरा स्तुतिलक्षणया वाचा । देवं दानादिगुणम् । ईळे । ईळ स्तुतौ । स्तौमि । वसूनाम् । वस्विति धननाम । धनानाम् । षष्ठीश्रुतेरर्थाय इति शेषः । अथवा स्वस्वामिसंबन्धलक्षणा षष्ठी । धनानां स्वामिनमित्यर्थः । तथाहि उक्तं वचनम्—

श्रियमि[३]च्छेद्धुताशनात्[४] ।

इति । अग्नौ[५] वामं वसु संन्यदध[६]—इति च श्रुतिः । अथवा वसवः पार्थिवा देवगणाः । तथाहि—अग्नि[७]र्वसुभिर्वसुर्वासवः इति[८] समाख्या । तस्मात् पृथिवी-स्थानाः[९]—इति भाष्यकारवचनम् । तेषां स्वामिनमित्यर्थः । सपर्यन्तः । सपर्यतिः परिचरणकर्मा । बहुवचनमेकवचनस्य स्थाने । सपर्यन् परिचरन् । पुरुप्रियम् । पुर्विति बहुनाम । बहूनां यजमानानां[१०] प्राणिनां वा सर्वेषां प्रियं इष्टम् । किमिव । मित्रं न[११]। नशब्द उपमार्थः। मित्रमिव । कीदृशं मित्रम् । क्षेत्रसाधसम् । साध संसिद्धौ । यथा[१२] क्षेत्रस्य दृष्टादृष्टसाधनभूतस्य साधयितृ मित्रं[१३] मनुष्यः तथा अहमपि अभिल-षितार्थप्रदायिनमिति[१४] संबन्धः ॥

**स्योना पृथिवी भवा-**
**नृक्षरा निवेशनी ।**
**यच्छा नः शर्म सप्रथः**[१५] **॥** ॥ १७ ॥

मेधातिथेरार्षम् । स्योनमिति सुखनाम स्यतेः अवसानार्थस्य[१६]। ग्राम्यसुख-भुक्त्या ह्यवस्यति विनश्यतीत्यर्थः । तथा च स्मरणम्—

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्[१७] ।

इति। सेवितव्यमिति वा। सिचेर्वर्णव्यापत्यादिना स्योनम्। सेवितव्यं हि[१] तदवश्यम्। तथा च स्मरणम्—

भोक्ता च धर्मान्[२]

इति व्यासवचनम्[३]। ततः स्योना सुखरूपा सुखस्यानेकविधस्य[४] संपादयित्री। हे पृथिवि प्रथिते सत्तात्माकाशवत्। भव भूयाः। अनृक्षरा[५]। ऋक्षरं कण्टकः सन्तापकः सुखं सर्वप्रकारं तपामि[६] नाशयामीत्युद्धतः। तपतेः वर्णव्यापत्या। कण्टकसदृशैर्जनैर्नाभिभवनीया[७] अयत्नभोग्या च इत्यर्थः[८]। निवेशनी निवेशयित्री च स्वर्गादिस्थानं बहुधनसंपादनेन। यच्छ देहि। नः अस्मभ्यम्। शर्म। शर्मशब्दः सुखपर्यायः। गृहपर्यायश्चास्ति। शर्म सुखं निर्वाणरूपम्[९]। सप्रथः सर्वतः पृथु प्रथितम्। अक्षयमित्यर्थः। अथवा शर्म गृहम्। सर्वतः पृथु प्रथितं त्रिभूमिप्रासादं[१०] सर्वर्तुसुखसाधनस्थानं अपरिमितं देहीति[११] संबन्धः ॥

**अभि त्वा देव सवित-**
**रीशानं वार्याणाम्।**
**सदावन् भागमीमहे[१२] ॥** ॥ १८ ॥

शुनःशेपो यूपे नियुक्तः सवितारमाह। अभीत्ययमुपसर्गः आभिमुख्ये वर्तते। त्वा त्वां हे देव दानादिगुण। सवितः सर्वस्य कर्मणः प्रसवितः अभ्यनुज्ञातः। ईशानमीश्वरम्। वार्याणाम्। वार्यं वृणोतेः। वरणीयाणां प्रार्थनीयानामायुरादीनाम्। सदा सर्वदा। अवन्। अवते रक्षणार्थस्येदं रूपम्। रक्षन्। किम्। लोकपालत्वात् लोकान्। भागम्। कस्य। प्रकरणवशादायुषः। आयुरेव वा भजनीयत्वात्[१३] भागशब्देनोच्यते। आयुः। ईमहे[१४]। याच्ञाकर्मायम्। याचामहे। द्विकर्मको याचिः[१५] दुहि याचि रुधि[१६]—इति स्मरणात्। त्वामायुर्याचामहे। त्वमप्यार्तानुग्राहकतया[१७] अस्मानायुष्मतः कुर्वित्यभिप्रायः ॥

**विश्वे देवाः शृणुतेमं हवं मे**
**ये अन्तरिक्षे य उप द्यवि ष्ठ।**

**ये अग्निजिह्वा उत वा यजत्रा**
**आसद्यास्मिन् बर्हिषि मादयध्वम् ॥[1] ॥ १९ ॥**

भरद्वाजस्यार्षम्। प्रत्यक्षकृतोऽयं मन्त्रः। हे विश्वे देवाः[2]। विश्वशब्दः सर्वपर्यायः। सर्वे देवाः पृथिव्यादिस्थानाश्रयिणः। शृणुत इमं हवं आह्वानम्। विज्ञापनमित्यर्थः। मे मम। मत्प्रयुक्तमित्यर्थः[3]। के पुनस्ते। ये ये वाय्वादयो[4] देवाः अन्तरिक्षे। सप्तमीश्रुतेर्वर्तमाना[5] इति शेषः। ये ये च सूर्यादयः उप द्यवि। उपेत्ययं उपरीत्येतस्य स्थाने द्रष्टव्यः। उपसर्गव्यत्ययश्च भाष्यकारेण दर्शितः—अथापि निरित्येष समित्येतस्य स्थाने[6]—इति। दिव उपरीत्यर्थः। स्थ भवथ। ये ये च अग्निजिह्वाः। जिह्वा प्रधानमङ्गानां[7] तन्मूलत्वात् सर्वव्यापाराणाम्। तेनाग्नेः प्राधान्यमुच्यते[8]। अग्निप्रधाना जातवेदःप्रभृतयः पार्थिवा देवाः। उत वा। उतशब्दः[9] अप्यर्थे। वाशब्दः चार्थे।

वायुर्वा त्वा मनुर्वा[10] त्वा[11]

इति यथा। अपि च यजत्राः यजमानानां त्रातारः[12]। के पुनस्ते। ये पृथिव्यादिस्थानाश्रयिणो[13] देवास्ते उच्यन्ते। कुतः। नैरुक्तानां त्रिस्थानव्यतिरिक्तस्य देवतान्तरस्याभावात्। पुरस्ताद्यच्छब्दश्रुतेः[14] तच्छब्दोऽध्याहार्यः। ते सर्वे आसद्य आगम्य अस्मिन् बर्हिषि। बर्हिःशब्दो यज्ञनाम। यज्ञे। स्वेन भागधेयेन मादयध्वम्। मदी हर्षे। हृष्यथ। हृष्टेषु विश्वेषु देवेषु युष्मासु अभिलषितार्थसिद्धिर्भविष्यतीत्यभिप्रायः॥

**नमो महद्भ्यो नमो अर्भकेभ्यो**
**नमो युवभ्यो नम आशिनेभ्यः।**
**यजाम देवान् यदि शक्नवाम**
**मा ज्यायसः शंसमा वृक्षि देवाः[15] ॥ ॥ २० ॥**

शुनःशेपो विश्वान् देवान् प्रार्थयते। नमो महद्भ्यः। नमःस्वस्तिस्वाहा-

स्वधा[१] इति नमोयोगाच्चतुर्थी[२]। नमोऽस्तु महद्भ्यः महनीयेभ्यः। वृद्धेभ्य इत्यर्थः। नमो अर्भकेभ्यः। अर्भकशब्दोऽल्पपर्यायः। दभ्रमर्भकमित्यल्पस्य[३]—इति वचनात्। अल्पेभ्यो बालेभ्यः। नमो युवभ्यः। ननु च सर्वे एव देवा नित्ययौवनयुक्ता[४] अमृतपानात्। किमिदमुच्यते युवभ्य[५] इति। सत्यमेवैतत्। तथापि सर्वदेवानां वयोऽवस्थोच्यत इति विशेषः। नम आशिनेभ्यः। अशू[६] व्याप्तौ इत्यस्येनच्-प्रत्ययो[७] भवति। आशिनेभ्यः व्याप्तृभ्यः। कस्य। वयसः प्रकृतत्वात्। बाल्यस्य यौवनस्य स्थाविरस्य च वयसो व्याप्तृभ्यः। मध्यमवयस्केभ्य इत्यर्थः। न केवलं नमस्कारमेव[८] कुर्मः। यजाम देवान् सर्वान्। यदि शक्नवाम इत्यात्मनो दैन्यं प्रकटयति। को जानीयान्मखावसानं भविष्यति इति। सर्वो हि लोकः प्रयोजनापेक्षयैव प्रवर्तते इत्याह। मा। मेति प्रतिषेधार्थो निपातो वृक्षीत्याख्यातेन संबध्यते। ज्यायसः। सर्वार्थानां प्राधान्याज्ज्यायःशब्देनायुरुच्यते। तन्मूलत्वात् सर्वपुरुषार्थानाम्। ज्यायस आयुषः। शंसं आ। छान्दसः परनिपातः। आशंसं आशंसनम्[९]। प्रार्थनमित्यर्थः। वृक्षि। वृश्चतेरुत्तमपुरुषैकवचनं मध्यमपुरुषबहुवचनस्य स्थाने। मा छेत्त। हे देवाः। युष्मत्प्रसादादायुरविनश्वरमस्माकमस्त्वित्यभिप्रायः॥

**सूर्यो नो[१०] दिवस्पातु**
**वातो अन्तरिक्षात्।**
**अग्निर्नः पार्थिवेभ्यः[११]॥** ॥ २१ ॥

चक्षोरार्षम्। अनेन मन्त्रेण तिस्रः प्रधानदेवताः प्रार्थ्यन्ते। तथाहि—तिस्र एव देवताः—इति नैरुक्ताः। अग्निः पृथिवीस्थानः। वायुर्वेन्द्रो वा अन्तरिक्षस्थानः। सूर्यो द्युस्थानः[१२]—इति प्रतिजानीते। सूर्यः। सुवति सरति[१३] इति वा सूर्यः। अथवा सु आर्यः स्वामी सर्वस्य इति। स्वरः सुः वर्णविपर्ययेण[१४]। तथा च श्रूयते—आदित्य एषां भूतानामधिपतिः[१५]—इति। सूर्यः नः अस्मान् दिवः द्युलोकात्। द्युलोकोद्भवात् भयादित्यर्थः। पातु रक्षतु। वातश्च अन्तरिक्षात् अन्तरिक्षभवाद्भयात्। अस्मान् पात्वित्यनुषङ्गः। अग्निश्च नः अस्मान् पार्थिवेभ्यः। वचनव्यत्ययः[१६]।

पार्थिवात् पृथिवीभवाद्भयात्[१]। पात्वित्यनुषङ्गः। त्रयाणां लोकेश्वराणां[२] प्रसादेन सर्व-दुःखोपशमोऽस्त्वित्यभिप्रायः ॥

**उप त्वाग्ने दिवेदिवे**
**दोषावस्तर्धिया वयम् ।**
**नमो भरन्त एमसि[३] ॥** ॥ २२ ॥

मधुच्छन्दस आर्षम्। उप। उपसर्गश्रुतेर्योग्यल्यबन्तपदाध्याहारः कार्यः। उपगम्य त्वा त्वां हे अग्ने। दिवे दिवे। अहर्नामैतत् सप्तम्येकवचनमेव समाम्नायेषु[४] समाम्नातम्। अहनि। दोषावस्तः। अहोरात्रनामैतदन्यत्र। इह तु अहःशब्देन पौनरुक्त्यपरिहारार्थं एवं योजनीयम्। दोषेति रात्रिनाम। वस्तरिति वसतिरुच्यते। रात्रिवासे। अहनि रात्रौ च इत्यर्थः। धिया। धीरिति कर्मनाम। यागाख्येन कर्मणा। वयं नमः। नम इत्यन्ननाम। अन्नं हविराज्यं वा। भरन्तः। पात्रस्थं[५] हविरुद्वहन्त इत्यर्थः। आ इमसि। आकारः श्रद्धायाम्। महत्या श्रद्धया युक्ताः। तथा च स्मरणम्—

श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतन्द्रितः[६]।

इति। इमसि। इणो रूपमेतत्। गमनेनात्राराधनं लक्ष्यते। आराधयामः। उपगम्य श्रद्धया संभृतहविष्कास्त्वां[७] यजामहे इत्यर्थः ॥

**अयं ते योनिर्ऋत्वियो**
**यतो जातो अरोचथाः ।**
**तं जानन्नग्न आ सी-**
**दाथा नो वर्धया गिरः[८] ॥** ॥ २३ ॥

विश्वामित्रस्यार्षम्। अरणिं प्रति समारोप्यमाणोऽग्निरुच्यते। अयमिति सन्निकर्षार्थं प्रतिनिर्दिश्यते। योनिशब्दोऽयमुभयलिङ्गः। तथाहि लिङ्गानुशासनकारः पठति—

श्रोणियोन्यूर्मयः पुंसि ।

इति[१]।

समुद्रं[२] वः प्रहिणोमि स्वां योनिम्[३] ।

इति च प्रयोगदर्शनात्। अयं ते तव योनिररण्याख्यः काष्ठविशेषः। ऋत्वियः ऋतुप्रभवः। ऋतुः कालः। अर्तेर्गतिकर्मणः। स हि गमयति भूतानि। जरयतीत्यर्थः। यतः काष्ठविशेषात् पूर्वं जातस्त्वमरोचथाः। रुच दीप्तौ। दीप्तवानभूः। तं योनिं आत्मजन्मनिमित्तमात्रं[४] जानन् हे अग्ने आरोह[५]। आरूढश्च सन्। अथ अनन्तरं नः अस्माकं वर्धय रयिम्। रयिरिति धननाम[६] रातेर्दानकर्मणः। दीयते हि तद्दृष्टादृष्टार्थं देवपितृमनुष्येभ्यः[७]। त्वत्प्रसादादस्माकं धनमस्त्वित्याशास्यते। धनमूलत्वात् सर्वक्रियाणाम्। तथाह्याप्तवचनम्—

धनमूलाः क्रियाः सर्वा द्रव्यहीने कुतः क्रियाः[८] ।

इति ।

**उपावरोह जातवेदः पुनस्त्वं**
**देवेभ्यो हव्यं वह नः प्रजानन् ।**
**आयुः प्रजाँ रयिमस्मासु धेहि**
**अजस्रो दीदिहि नो दुरोणे**[९] ॥ ॥ २४ ॥

पुनर्निर्मथ्यमानोऽग्निरभिमन्त्र्यते[१०]। उपावरोह[११]। पृथिवीलोकमिति शेषः। हे जातवेदः जातविद्यः। जाते भूतजाते विद्यमानः पुनस्त्वमुपावरूढः। त्वं देवेभ्यो यागाङ्गभूतेभ्यो हव्यं हविराज्यादिकम्। वह प्रापय। नः अस्माकम्। त्वयि हुतं इति शेषः। प्रजानन् प्रकर्षेण जानन् स्वमधिकारमस्मद्भक्ततां वा। तदनन्तरमायुः शतसंवत्सरलक्षणं च प्रजां च दृष्टादृष्टोपकारिणीम्। रयिं धनं च[१२]। तद्विधमस्मासु वेदोदितकर्मनिरतमानसेषु[१३]। धेहि धारय। स्थापयेत्यर्थः। अजस्रः अननुगतः त्वं[१४] सदा दीदिहि दीप्यस्व[१५]

नः अस्माकम्। दुरोणे। दुरोण इति गृहनाम। दुरवा भवन्ति। दुस्तर्पाः[१]। दुरव इत्यर्थः। देवयजनाख्ये। अस्माभिराराध्यमान इति शेषः। तदेवमुच्यते। यस्मात्त्वयि राजमाने गृहे भयं न विद्यते। एष वैयाघ्रकुलगोपो यदग्निः इति ॥

**अभि त्वा शूर नोनुमो-**
**ऽदुग्धा इव धेनवः।**
**ईशानमस्य जगतः स्वर्दृश-**
**मीशानमिन्द्र तस्थुषः[२] ॥ ॥ २५ ॥**

वसिष्ठस्यार्षम्। इन्द्र उच्यते। स च मध्यमस्थानः। अभि। उपसर्गश्रुतेः योग्यल्यबन्तपदाध्याहारः[३] कार्यः। अभिगम्य त्वा त्वां[४]। हे शूर। शूरः शवतेर्गतिकर्मणः। शवति गच्छति शत्रून् इति शूरः। शत्रूणामभिभविता। नोनुमः अत्यर्थं स्तुमः। अदुग्धा इव धेनवः इत्यभिलाषातिरेकं दर्शयति। प्रस्नुतपीवरस्तन्यो धेनवो वत्सोत्सुकतया वाश्यन्ते। तत्कीदृशम्। ईशानमस्य ईश्वरमस्य। जगतो जङ्गमस्य। स्वर्दृशम्। स्वःशब्दः[५] सर्वपर्यायः। सर्वस्य शुभाशुभस्य द्रष्टारम्। लोकपालत्वादीशानमीश्वरम्। हे इन्द्र तस्थुषः स्थावरस्य। कथमयमस्य[६] जङ्गमस्य स्थावरस्य च ईश्वरः। उच्यते[७]। इन्द्रस्य हि रसानुप्रदानं कर्म[८]। तदधीनत्वात् सर्वभूतानाम्। तस्मादसावेवमुच्यते। इति।

**न त्वावाँ[९] अन्यो दिव्यो न पार्थिवो**
**न जातो न जनिष्यते।**
**अश्वायन्तो मघवन्निन्द्र वाजिनो**
**गव्यन्तस्त्वा हवामहे[१०] ॥ ॥ २६ ॥**

तस्यैवार्षम्। नेति[११] प्रतिषेधार्थो निपातोऽस्तिक्रियामाक्षिपति। नास्ति। त्वावान् त्वत्तुल्यः। अन्यो दिव्यः दिवि भवः। द्युलोके त्वत्सदृशो नास्तीत्यर्थः। न पार्थिवः नापि पार्थिवः। नापि पृथिव्यां भवः। पृथिव्यामपि त्वत्तुल्यो नास्तीत्यर्थः।

अस्तम्। अस्तमिति गृहनाम। गृहम्। वि परेतन विभिन्नाः परागच्छत। एतदुक्तं भवति[१]। मनोहरवपुर्युक्तामाभरणालंकृत[२]सर्वगात्रीं[३] स्त्रियं दृष्ट्वा चक्षुषः फलमनुभूय[४] दत्वा चाशिषमस्यै स्वं स्वं गृहं विपरेतन इत्याशास्यते[५]॥

इति वाररुचे निरुक्तसमुच्चये

प्रथमः कल्पः[६]॥

---

# वररुचिनिरुक्तसमुच्चयः

## द्वितीयः कल्पः[१]



पूर्वस्मिन् कल्पे प्रकीर्णकरूपेण निर्वचनक्रमः प्रदर्शितः[२]। इदानीं—ज्ञात्वा चानुष्ठानम्[३]—इत्युक्तत्वात् नित्यकर्मविहिता मन्त्रा[४] व्याख्यायन्ते।

**मित्रस्य चर्षणीधृतः**
**श्रवो देवस्य सानसिम्**
**सत्यं चित्रश्रवस्तमम्**[५] ॥ ॥ १ ॥

विश्वामित्रस्यार्षम्। मित्रो मध्यमस्थानदेवतासु[६] पठितत्वान्मध्यमस्थानत्वेन[७] निरुक्तः[८]। द्युस्थानोऽपि[९] मित्रोऽस्ति[१०]। स इह निरुच्यते। प्रथमं तावदयं यजुःशाखानुरोधेन[११] व्याख्यायते। मित्रः। मात्वा निर्माय[१२] उदयेन कृत्स्नं जगत्त्रायत[१३] इति मित्रः। जगत्त्रयत्राणविधानदक्षो ह्यसावुदेति। इह देवतातत्त्वं प्रति बहुविदां मतिभेदः[१४]। केचिदाहुः[१५] पुरुषविधत्वं देवतायाः। कुतः। बाहुमुष्ट्यादेः श्रूयमाणत्वात्[१६] अदनादिक्रियायोगाच्च। अपरे पुनरपुरुषप्रकारं मन्यन्ते। कुतः। प्रत्यक्षभूतेष्वग्न्यादिषु तस्यानुपलभ्यमानत्वात् वस्तुसत्त्वमात्रमेवेति[१७]। उभयप्रकारमित्यन्ये। उभयथा मन्त्रेषु श्रूयमाणत्वात्। पुरुषविधत्वेन केषुचिन्मन्त्रेषु श्रूयते—

ऋष्वा त इन्द्र स्थविरस्य बाहू[१८]।

इति। केषुचिद्वस्तुमात्रेण—

अगन्म ज्योतिरुत्तमम्[१९]।

इति। सर्वथा मन्त्राक्षरव्यतिरिक्तं[१] देवतायाः प्रमाणं नास्ति इति सिद्धान्तः[२]। मित्रशब्दनिर्वचनप्रसङ्गेन[३] देवतास्वरूपमपि मनागुक्तम्। अलमतिप्रसङ्गेन। प्रकृतमभिधीयते निर्वचनान्तरम्। संमिन्वानो द्रवति इति वायुः[४]। मिञ्[५] प्रक्षेपणे[६] द्रु गतौ इत्येतयोर्धात्वोः[७] एतद्रूपम्[८]। सम्यक् प्रक्षिपन् सर्वत्र[९] स्वं जोतिः द्रवत्यन्तरिक्षमिति मित्रः। मेदयतेर्वा[१०] क्त्रन्प्रत्ययान्तस्य[११]। सर्वमसावुदकेन स्नेहयति। तथा हि—तोयदा अमुतोऽर्वाञ्चः पर्यावर्तन्ते[१२]। सहस्थानादुदकस्यादित्यात्। अथ घृतेनोदकेन[१३] पृथिवी व्यद्येते[१४]—इति निरुक्तवचनम्। मित्रस्य भगवत आदित्यस्य। चर्षणीधृतः। चर्षणयो मनुष्याः चायतेः ऋषतेश्च[१५]। चायतिः पश्यतिकर्मा। ऋषतिः गतिकर्मा। पश्यन्ति हि ते सर्वमप्यागमेन गच्छन्ति च दुःसाधमुपायेन। प्रदर्शनार्थमिदं[१६] चर्षणीग्रहणम्। चर्षणीप्रभृतीनां भूतजातीनां वृष्टिप्रसादादिना[१७] धारयितुः। श्रवः। श्रवःशब्देन तेजश्चान्नं च यशश्चोच्यते[१८]। प्रकरणसामर्थ्यादिह तेजोमयं मण्डलमुच्यते। तथा च प्रकरणवश एव विनियोक्तव्यः[१९]—इति भाष्यकारवचनम्। श्रूयते वेदशिरसि—आश्रीयते वा योगिभिः[२०]—इति। श्रवःशब्देनादित्य[२१]-मण्डलमुच्यते[२२]। देवस्य दानादिगुणयुक्तस्य स्तोतॄणामभिलषितार्थप्रदस्य दीप्यमानस्य वा भुवनविभूत्यै द्युस्थानस्य वा। सानसिम्। मण्डलविशेषणमेतेत्। वन षण संभक्तौ इत्यस्य असिप्रत्ययान्तस्य[२३] एतद्रूपम्[२४]। छान्दसत्वात्[२५] अमो लुगभावः[२६]। सानसि संभजनीयं[२७] सर्वभूतानाम्। तथा च श्रूयते—उद्यन्तं वा[२८] एतं सर्वाः प्रजाः प्रतिनन्दन्ति[२९]—इति[३०]। सत्यम्। सततमततीति[३१] सत्यं सर्वदा गमनस्वभावम्। तथा चाहुः पौराणिकाः—आदित्यः सर्वदा मेरुपर्वतं पर्यटति[३२]—इति। तथा च[३३] श्रूयते—

न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति[३४]।

इति[३५]। स्पश इति देवदूता आदित्यादय उच्यन्ते। पश्यन्ति ते सर्वप्राणिनां चेष्टितं[३६] शुभमशुभं वा साक्षिभूतत्वात्[३७]। तथा च श्रूयते—

पिता कुटस्य चर्षणिः[३८]।

इति। अस्य च विवरणम्—पिता कृतस्य कर्मणश्चायिता आदित्यः[१]—इति। अथवा सत्यं सत्सु विद्यमानेषु स्तम्भकुम्भादिषु तायते इति[२]। तेषां प्रकाशकमित्यर्थः। चित्रश्रवस्तमम्[३]। चित्रं चायनीयम्[४]। दर्शनीयमित्यर्थः। श्रवः तेजः येषां ते[५] चित्रश्रवसः अग्न्यादयः। तेषामतिशयेन उत्कृष्टं चित्रश्रवस्तमम्। तथा चोक्तम्—

आदित्यस्तेजसामिव[६]।

इति। साकाङ्क्षत्वात् वन्दामहे इति वाक्यशेषः।

अवो देवस्य सानसि।

द्युम्नत्[७]

इति दाशतयीषु पाठः। तथा सति अवतेः रक्षणार्थस्य असुन्प्रत्ययान्तस्य[८] अवः पालयिता। द्युम्नशब्देन यशोऽन्नं वाभिधीयते। द्योतयतीति द्युम्नम्[९]। एवमुभयथा मन्त्रो निरुक्तः॥

**मित्रो जनान् यातयति प्रजानन्**
**मित्रो दाधार पृथिवीमुत द्याम्।**
**मित्रः कृष्टीरनिमिषाभि चष्टे**
**सत्याय हव्यं घृतवद्विधेम[१०]॥** ॥ २ ॥

विश्वामित्रस्यार्षम्। मित्रः निरुक्त आदित्यः। जनान्। जायन्त इति जनाः प्राणिन उच्यन्ते। सर्वप्राणिनः। यातयति प्रयत्नेन चेष्टयति। प्रजानन्। किम्। यस्य यत् गर्भाधानादि विहितं तस्य तत् इति[११] शेषः। तथा च[१२] स्मर्यते—

पञ्चैतानि निषिच्यन्ते गर्भस्थस्यैव[१३] देहिनः।
आयुः कर्म च वित्तं च विद्या निधनमेव च[१४]॥

इति। तदनुरूपं व्यापारयतीत्यर्थः[१५]। अथवा याततिर्गत्यर्थः[१६]। यातयति गमयति

प्राणिनः कृष्यादिकर्मसु। प्रजानन्। जन जनने इत्येतस्य छान्दसं रूपम्। प्रकर्षेण जायमानः[१]। उद्यन् उदयगिरेरित्यर्थः। तथा च श्रूयते—उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि........। मित्रो दाधार। मित्र एव[२] वृष्टिप्रसादादिना धारयति। पृथिवीम्। पृथिवीशब्देन तद्गतं भूतजातमुच्यते। पृथिव्याधारभूतं भूतग्रामम्। उतशब्दोऽप्यर्थे द्यांशब्दात् परो द्रष्टव्यः। द्यामपि। दिवं चेत्यर्थः। किंच मित्रः कृष्टीः। कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्तीति। कथम्। दृष्टादृष्टार्थेन[३] कर्मणा तद्वन्तो मनुष्याः। अनिमिषा। तृतीयैकवचनस्य सुपां सुलुक्[४] इत्याकारः। अनिमिषेण। केन। सामर्थ्याद्दिव्येन चक्षुषा। अनिमिषा देवा इति प्रसिद्धम्[५]। तथा च[६] श्रूयते—

न तिष्ठन्ति न नि मिषन्त्येते[७]।

इति[८]। अभिचष्टे। पश्यतिकर्मायम्। आभिमुख्येन पश्यति लोकपालत्वात् पुण्यकर्मणि पापकर्मणि च वर्तमानान्। साकाङ्क्षत्वात् यत्तच्छब्दावध्याहार्यौ[९]। य एवंविधः तस्मै। सत्याय[१०] सत्यभूताय। हव्यं हविः चर्वादि। घृतवत् घृतेन च युक्तम्। विधेम। विदधातिर्दानकर्मा[११]। ददाम। त्वत्परिचर्यासक्तमनसो[१२] वयं इति वाक्यशेषः। ब्रुवाण इति पाठे[१३] ब्रुवाणशब्दो यजमानवचनः[१४] प्राणरूपत्वात्[१५]। तथा च श्रूयते—तस्मादेनं प्राण इत्याचक्षते[१६]—इति[१७]॥

**प्र स मित्र मर्तो अस्तु प्रयस्वान्**
**यस्त आदित्य शिक्षति व्रतेन।**
**न हन्यते न जीयते त्वोतो**
**नैनमंहो अश्नोत्यन्तितो न दूरात्[१८]॥ ॥ ३ ॥**

विश्वामित्रस्यैवार्षम्। प्रशब्दः अस्त्वित्याख्यातेन संबध्यते। सः हे मित्र मर्तः। मर्त इति मनुष्यनाम[१९] मरणधर्मत्वात्। म्रियते ह्यसौ यदा कदाचित्। तथाह्याप्तवचनम्—जातस्य हि मरणं ध्रुवम्[२०]—इति। प्रास्तु[२१] प्रकर्षेणास्तु भवतु भृशम्। प्रयस्वान्। प्रय इत्यन्ननाम। तदस्यास्ति[२२] इति[२३] तद्वान्[२४]। भूम्नि चायं मतुप्प्रत्ययः[२५]।

बहुन्नो भवतु। बहुन्नो हि लोके नितरां विराजते। तथा च श्रूयते—तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति[१]—इति। कोऽसौ। यः यजमानः श्रद्दधानः। ते तुभ्यम्। आदित्य अदितेः पुत्र। शिक्षति। शिक्षतिर्दानकर्मा। ददाति। व्रतेन। व्रतमिति कर्मनाम[२]। कर्मणा यागाख्येन। किम्। सामर्थ्यात् हविः[३] चर्वादि। न केवलमन्नवानेव स भवति[४]। न हन्यते मृत्युनापि पुरा शतसंवत्सरलक्षणादायुषः। न जीयते। ज्या वयोहानौ[५]। नाप्याश्रीयते दुःखादिभिः। अथवा जि जये इत्येतस्यैतद्रूपम्[६]। न जीयते शत्रुभिः। त्वोतः। ऊत इत्यवते रक्षणार्थस्यैतद्रूपम्। त्वया रक्षितः। अनुगृहीत इत्यर्थः। न इत्येष निपातः अश्नोतीत्याख्यातेन संबध्यते। एनं[७] त्वदाराधनतत्परम्[८]। अंहः[९] अंहःशब्दः हन्तेर्निरूढोपधात् विपरीताक्षरोऽसुन्प्रत्ययान्तो[१०] निरुक्तः[११] पापपर्यायः। हन्ति ह्येतत् कर्तारं यदा कदाचित्। तथा च स्मरणम्—

अधर्मेणैधते तावत्ततो भद्राणि पश्यति।
ततः सपत्नान् जयति समूलं तु विनश्यति[१२]॥

इति[१३]। त्रिप्रकारमपि पापम्। अश्नोति[१४]। नञोऽत्र[१५] संबन्धः। नाश्नोति नाश्नुते। न बाधत इत्यर्थः। अन्तितः[१६]। दूरप्रतियोगित्वादन्तिशब्दः समीपवचनः[१७]। समीपात्[१८]। इह जन्मनि इत्यर्थः। न दूरात्। नापि दूरात् पूर्वजन्मनश्च। पञ्चम्येकवचनमेतत सप्तम्येकवचने द्रष्टव्यम्। इह जन्मनि च पूर्वजन्मनि च। कृतमिति वाक्यशेषोऽध्याहार्यः। एतदुक्तं भवति। परिदृढभक्तिपुरःसरं भगवन्तं भक्तवत्सलमादित्यं परिचरतः सर्वाः संपदो भवन्तु इत्यभिप्रायः॥

**आ सत्येन रजसा वर्तमानो**
**निवेशयन्नमृतं मर्त्यं च।**
**हिरण्ययेन सविता रथेना**
**देवो याति भुवना विपश्यन्[१९]॥ ॥ ४ ॥**

१उद्यन्नादित्यः सवितृशब्देनोच्यते[२]। आकारः वर्तमान इत्यनेन[३] संबध्यते। सत्येन[४] सत्सु विद्यमानेषु स्तम्भकुम्भादिभावेषु तायमानेन[५]। कृष्णेन इति दाशतयीषु आह[६]। तथा सति कृष्णं कर्षतेर्नाशार्थस्य[७] तमआदेर्नाशयित्रा[८]। रजसा[९]। रजः-शब्देन तेजश्च उदकं च[१०] लोकश्च[११] शोणितं च अहश्च उच्यते। इह प्रकरणवशात्[१२] तेजोऽभिधीयते। वर्तमानः। आङोऽत्र संबन्धः[१३]। आवर्तमानः परिभ्रमन् नेमिधर्मेण। निवेशयन् प्रवेशयन्। कुर्वन्नित्यर्थः। अमृतं अमरणम्। जीवनमित्यर्थः[१४]। मर्त्यं च मरणं च। तदायत्तं हि जीवनं मरणं च कालस्य हेतुभूतत्वात्। तथा च स्मरणम्[१५]—

कालः पचति भूतानि कालः संहरति प्रजाः[१६]।

इति। अथवा निवेशयन् व्यापारयन्। अमृतम्। द्वितीयैकवचनं चैतत् बहुवचनस्य स्थाने[१७] द्रष्टव्यम्। अमृतान् अमरणधर्मणो देवान्[१८]। एवमेव मर्त्यं मरणधर्मणो[१९] मनुष्यान्[२०]। देवलोकं मनुष्यलोकं च इत्यर्थः। स ह्यात्मीयेन तेजसा सर्वं व्यापारयति। अतश्च हिरण्ययेन हिरण्मयेन। सविता सर्वस्य कर्मणः प्रसविता अभ्यनुज्ञाता[२१]। रथेन आ देवो याति आयाति देवो[२२] दानादिगुणयुक्तः। भुवना[२३]। शेः छन्दसि बहुलं[२४] इति शिलोपः। भुवनानि भूतजातानि[२५] विपश्यन्[२६]। साक्षिरूपेण स्थितः सन् इत्यर्थः[२७]।

**उद्वयं तमसस्परि**
**ज्योतिष्पश्यन्त उत्तरम्।**
**देवं देवत्रा सूर्य-**
**मगन्म ज्योतिरुत्तमम्[२८] ॥** ॥ ५ ॥

प्रस्कण्वस्यार्षम्। एतेन[२९] द्विप्रकारं ज्योतिरादित्याख्यं बाह्यमाभ्यन्तरं चाभिधीयते। उत् इत्ययमुपसर्गः अन्तर्भूतक्रियावचनो द्रष्टव्यः[३०]। उदितमित्यर्थः। वयं दातारः। तमसः[३१] अन्धकारस्य। परि। वर्जनार्थः। एतदुक्तं भवति। तमोऽपनयनार्थम्। बहुलं तमः पङ्कं विदार्य[३२] पद्ममिव उत्थितं इत्यर्थः। ज्योतिः। द्युतेरादिवर्णव्यापत्त्या

क्तिन्प्रत्ययान्तस्य ज्योतिःशब्दो निरुक्तः[1]। ज्योतिः दीप्तं मण्डलं प्रत्यक्षगोचरम्। पश्यन्तः प्रणमन्तः[2]। परिदृढभक्तिपुरःसरमाराधयन्त इत्यर्थः। उत्तरं उत्तारणं उत्तारण-हेतुभूतं प्राणिनां[3] सुप्तानां मृतकल्पानाम्। एकवाक्यतासंपादनार्थं यत्तच्छब्दाव-ध्याहार्यौ[4]। यदेवंविधं मण्डलं[5] करामलकरूपं तत्रस्थं देवं[6] दानादिगुणयुक्तं आगम-गम्यं निर्वाणम्। देवत्रा देवत्रं देवानामपि त्रातारं निरतिशयसामर्थ्ययोगेन[7]। सूर्यं सर्तारमन्तरिक्षे सर्वदा धारयितारं[8] वा प्राणिनां प्राणरूपत्वात्। तथा च—आदित्यो वै बाह्यः प्राणः[9]—इत्युपनिषत्सु गीयते। अगन्म गतवन्तः। प्रायेण[10] गमिष्याम इत्यभिप्रायः। ज्योतिः[11] ज्योतिर्मयं[12] उत्तमं उत्कृष्टं परं पुरुषम्। एतदुक्तं भवति। अनेकजन्माभ्यासबलेन[13] सर्वोपनिषत्सु[14] गीयमानं[15] प्रत्यक्षपरोक्षरूपं भगवन्तमा-.दित्यं प्रेत्य सुखिनो भविष्यामः इति॥

**उदु[16] त्यं जातवेदसं**
**देवं वहन्ति केतवः।**
**दृशे विश्वाय सूर्यम्[17]॥** ॥ ६ ॥

प्रस्कण्वस्यार्षम्। उत् इत्ययमुपसर्गः वहन्तीत्याख्यातेन संबध्यते। उकारः[18] पदपूरणः विनिग्रहादीनां[19] अर्थानां[20] असंभवात्। त्यम्। तच्छब्दसमानार्थः[21] त्यच्छब्दः। तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः। यं मुनिजनविद्याधरादयो नमन्ति तं इति संबन्धः। जातवेदसम्। जाते भूतजाते विद्यते अस्ति इति जातवेदाः आत्मरूपत्वात्। तथा च श्रूयते—

सूर्य आत्मा जगतस्तस्थुषश्च[22]।

इति[23]। जातवेदसं[24] सर्वप्राणिहृदयकोशगुहाशयम्। देवं दानादिगुणयुक्तम्। वहन्ति उदोऽत्र संबन्धः[25]। उद्वहन्ति उद्गमयन्ति। व्यापारयन्ति इत्यर्थः। केतवो रश्मयः सहस्रसंख्याकाः[26]। अथवा केतवो नाशयितारः[27]। कस्य। तमसो रक्षसश्चैनसश्च[28]। किमर्थम्[29]। दृशे। दृशे विख्ये च[30] इति तुमर्थे निपात्यते। द्रष्टुं दर्शनाय

कस्य। विश्वाय[१]। विश्वशब्दः सर्वपर्यायः। षष्ठ्यर्थे चतुर्थी। तथा एकवचनं बहुवचनस्य स्थाने द्रष्टव्यम्। विश्वेषां सर्वेषाम्[२]। भूतजातानामिति वाक्यशेषः। तथा हि यास्कस्य निरुक्तभाष्यकारस्य वचनम्—सर्वेषां भूतानां दर्शनार्थाय[३]—इति। सूर्यं सरणधर्माणं आदित्यम्। स हि सर्वदा सरत्येव न क्वचिदवतिष्ठते भूतजातानां विभूत्यै।

**चित्रं देवानामुदगादनीकं**
**चक्षुर्मित्रस्य वरुणस्याग्नेः।**
**आप्रा द्यावापृथिवी अन्तरिक्षं**
**सूर्य आत्मा जगतस्तस्थुषश्च[४]॥** ॥ ७ ॥

कुत्सस्यार्षम्[५]। चित्रं चित्ररूपम्। देवानां अग्न्यादीनां[६] दीप्तिमतां मध्ये। तथाह्युक्तम्—

आदित्यस्तेजसामिव[७]।

इति। अथवा चायनीयं देवानां पूजनीयम्। उदगात् उदगमत्। तदिदं ज्योतिरादित्याख्यम्[८]। अनीकम्[९]। अनीकशब्देन सेना अभिधीयते। सेनारूपं प्रतिबन्धीभूतानां देवद्विषां अपनेतृ। अथवा अनीकं[१०] अननम्[११]। प्राणरूपमित्यर्थः। चक्षुः। चक्षुःशब्दः चष्टेः[१२] पश्यतिकर्मणः। चक्षुः कस्य। मित्रस्य वरुणस्य अग्नेश्च। तथा च श्रूयते—असौ वा आदित्यो देवानां चक्षुः[१३]—इति। सर्वेषां देवानां चक्षुः। किं पुनर्मनुष्यादीनाम्। उदयानन्तरमेव आप्राः[१४]। प्रा पूरणे। आभिमुख्येन पूरयति[१५]। किम्। द्यावापृथिवी[१६] दिवं च पृथिवीं च। अन्तरिक्षं च[१७]। केन। महत्त्वेन[१८]। स्वेन महत्त्वेन[१९] तत्क्षणमेव त्रैलोक्यं प्रकाशयतीत्यर्थः। अन्तर्हितप्रकाशनं[२०] हि भगवत आदित्यस्य कर्म[२१]। तथा चोक्तं भाष्यकारेण[२२]—यच्च किंच प्रवल्हितं आदित्यकर्मैव[२३] तत्[२४]—इति। किंच सूर्य आत्मा। अत्तेर्धातोरात्मशब्दो[२५] निरुक्तः[२६]। अत्ति ह्यसौ सर्वाणि भूतान्यनुप्रविश्य चतुर्विधमाहारम्। तथा च गीयते—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः[१] ।
प्राणापानसमायुक्तः[२] पचाम्यन्नं चतुर्विधम्[३]॥

इति । कस्य[४]। जगतः जङ्गमस्य मनुष्यादेः । तस्थुषश्च स्थावरस्य वृक्षादेः । द्विविधं खलु भूतजातमिहावस्थितं जङ्गमं च स्थावरं च । तस्य सर्वस्य अयमेवात्मरूपेण[५] स्थितः इति ॥

**तच्चक्षुर्देवहितं**
**शुक्रमुच्चरत् ।**
**पश्येम शरदः शतं**
**जीवेम शरदः शतम्**[६] ॥ ॥ ८ ॥

वसिष्ठस्यार्षम् । आदित्यो देवता । तच्छब्देन जगद्व्यापारकारणं[७] आदित्याख्यं ज्योतिरभिधीयते। अविनाशि वेदविद्भिरभिवाद्यमानं तच्चक्षुः । चष्ट इति पश्यतिकर्मा[८]। पश्यति ह्यसौ अध्यक्षभूतो भगवानादित्यः प्राणिनां चेष्टितं शुभमशुभं वा। अथवा चक्षुर्दर्शनम्[९]। कस्य। देवानाम्। तथा च श्रूयते—असौ वा आदित्यो देवानां चक्षुः[१०]—इति । देवहितं देवानां दानादिगुणयुक्तानां अग्न्यादीनां हितम् । आदित्यो ह्युदयास्तमयाभ्यां अग्निहोत्रहविःप्रदानार्थं अहोरात्रविभागं संपादयति[११]। तस्माद्धितमुच्यते। देवैर्वा निहितं लोकरक्षणार्थं देवहितम् । अथवा देवा दानशीला अनुष्ठायिनः[१२]। तेषां आत्मसायुज्यसंपादनेन हितं श्रेयस्करं तत्र प्रविष्टानां नित्यानन्दत्वात् । पुरस्तात् इति शाखान्तरम्[१३]। पूर्वस्यां दिशि । शुक्रम् । शोचतेर्दीप्ति[१४]-कर्मणः। शुग्दीप्तिः । सा यस्यास्तीति मत्वर्थीयो रप्रत्ययः[१५]। मधुर इति यथा। शुक्रम् । अतितेजस्वितया विराजमानमित्यर्थः । उच्चरत् उद्यत् उन्मुखमयूखं ज्योतिरादित्याख्यम् । पश्येम । कियन्तं कालम् । शरदः शतम् । शरच्छब्दः संवत्सरपर्यायः। संवत्सरशतम् । अथवा शरच्छब्देन ऋतुरभिधीयते[१६] न संवत्सरः। शरदि हि व्याधिबहुलत्वात् दुर्दर्शमिति[१७] विशेषेण प्रार्थ्यते । शृणाति[१८] इति शरत् । तथा च[१९] श्रूयते—शरद्वा अस्यां कालः । सा ते या वा एष हिनस्ति यं हिनस्ति[२०]—इति[२१]। जीवेम

शरदः शतम्। जीवन्नेव पश्यति इति पौनरुक्त्यप्रसङ्गो जातः। अतः तत्परिहारार्थं एवं योजनीयम्। पश्यतिक्रियया दर्शनमात्रमभिहितम्। जीवेम इत्यनेन सर्वसंपत्सङ्गतं[1] जीवनमाशास्यते न प्राणधारणमात्रम्। एतदुक्तं भवति। देवमनुष्यादिसुखसाधनभूतं आदित्याख्यं ज्योतिः पश्यन्तः सर्वाभिः संपद्भिः संगत्य सुखं जीवेम इति। मन्त्रशेषो[2] व्याख्यातः ॥

**इमं मे वरुण श्रुधी**
**हवमद्या च मृळय।**
**त्वामवस्युरा चके[3] ॥** ॥ ९ ॥

शुनःशेपो यूपे[4] नियुक्तो वरुणं प्रार्थयते। प्रत्यक्षकृतोऽयं मन्त्रः। इमं प्रक्रान्तं मे मम मत्संबन्धिनम्। मत्प्रयुक्तमित्यर्थः। हे वरुण परितस्तेजसा सर्वस्य जगतः प्रकाशयितः वर्षेण वा सर्वस्याच्छादयितः। श्रुधि शृणु। हवं स्तोममृज्मयं एकत्रिंशत्संख्यायुक्तम्। तथा च हरिश्चन्द्रस्याख्याने श्रूयते—स वरुणं तुष्टाव अत उत्तराभिरेकत्रिंशता[5]—इति। श्रुत्वा[6] च स्तोममार्तानुग्राहकतया अद्य अस्मिन्नहनि। चशब्दः समुच्चयार्थः। श्वः च। प्रदर्शनार्थमिदम्। सर्वेष्वप्यहस्सु इत्यर्थः। मृळय। मृड सुखने। सुखय सुखं कुरु। त्वां निग्रहानुग्रहसमर्थम्। अवस्युः। अवते रक्षणार्थस्य वा तर्पणार्थस्य वा असुन्प्रत्ययान्तस्य[7] अव इति रूपम्। सुप आत्मनः[8] इति क्यच्प्रत्ययः[9]। क्याच्छन्दसि[10] इति उन्प्रत्ययः[11]। अवस्युः पालनकामः तर्पणकामो वा। अहमासन्नमृत्युरिवास्थितः आचके। याच्ञाकर्मायन्। आभिमुख्येन याचे। याचेर्द्विकर्मकत्वात्[12] प्रकरणान्वितं कर्मपदमध्याहार्यम्। आयुष्कामो[13] हि शुनःशेपः प्रजापतिमुखान् देवान् तुष्टाव[14]। अत आयुर्याचे त्वामित्यर्थः। यतस्त्वं पापकर्मणां निग्रहे[15] युक्तः। तथाहि श्रूयते—अमृते वै क्रियमाणो वरुणोऽनुगृह्णाति[16]—इति। तस्मादिह[17]-दुश्चरिताद्वा पूर्वजन्मदुश्चरिताद्वा अहमिमामवस्थां प्राप्तः। यथाहं क्षपितकल्मषो[18] दीर्घायुश्च स्यां[19] तथा त्वया संपादनीयः इति ॥

**तत्त्वा यामि ब्रह्मणा वन्दमान-**
**स्तदा शास्ते यजमानो हविर्भिः ।**
**अहेळमानो वरुणेह बो-**
**ध्युरुशंस मा न आयुः प्र मोषीः[1] ॥ ॥ १० ॥**

शुनःशेपो वरुणमाह। तच्छब्देन बुद्धौ विपरिवर्तमानमभिलषितमायुरभिधीयते[2]। आयुस्त्वां[3] याचे। अथवा[4] तत्त्वा इति तनु विस्तार इत्यस्य[5] त्त्वाप्रत्ययान्तस्य उदितो वा[6] इति इटः वा इति[7] विकल्पे एतद्रूपम्। तत्त्वा तनित्वा परिचर्यया याचे। परिचर्ययाभीष्टा देवता अभिलषितमर्थं ददाति। ब्रह्मणा परिवृद्धेन एकत्रिंशत्संख्यायुक्तेन[8] स्तोत्रेण वन्दमानः स्तुवन्। स्तुतिपूर्वत्वात् याच्ञायाः। तदाशास्ते[9] तदेवायुराशास्ते[10] कामयते[11]। अयमपि यजमानो हरिश्चन्द्राख्यो[12] महोदरव्याधिना[13] ग्रस्तः। तथा हरिश्चन्द्रोपाख्याने श्रूयते—अथ हैक्ष्वाकं वरुणो जग्राह। तस्य महोदरं[14]जज्ञे[15]—इति। हविर्भिः अन्नादिभिः[16]। अतो भगवन् अहेळमानः। हेळतिः[17] क्रुध्यतिकर्मा[18]। अक्रुध्यन्। कुतः। सर्वो हि लोको[19] बहुभिर्याच्यमानः क्रुध्यति। हे वरुण। इह इति कालः प्रतिनिर्दिश्यते। एतस्मिन् काले। बोधि बुध्यस्व। विज्ञापनमिति शेषः। बुध्वा च भक्तवत्सलतया। उरुशंस। उर्विति बहुनाम। शंस स्तुतौ। बहुस्तुत[20] बहुभिर्यजमानैः स्तूयमान। कंचिदर्थं कामयमान एव स्तौति। मा। मेति प्रतिषेधार्थो निपातः प्रमोषीरित्याख्यातेन संबध्यते। अस्मदो द्वयोश्च[21] इति द्वयोः बहुवचनम्। आवयोः मम हरिश्चन्द्रस्य च। आयुः जीवितम्। मा प्रमोषीः मा अपहार्षीः। त्वत्प्रसादादहं हरिश्चन्द्रोऽपि[22] नीरोगौ दीर्घायुषौ[23] भूयास्व इत्यभिप्रायः॥

**यच्चिद्धि ते विशो यथा**
**प्र देव वरुण व्रतम्।**
**मिनीमसि द्यविद्यवि[24] ॥ ॥ ११ ॥**

शुनःशेपस्यैव वाक्यम्। यच्छब्दो[25] यदीत्यस्यार्थे[26] द्रष्टव्यः। चित् हि। द्वावपि निपातौ अनेकार्थौ। चिदित्येषः अनेककर्मा[27]। हि इत्येषः अनेक[28]कर्मा[29]।

इति भाष्यकारवचनात्। तथापि इह पूजादीनां[१] अर्थानामविद्यमानत्वात् पदपूरणार्थौ। अनर्थकौ[२] इत्यर्थः। ते तव व्रतमिति संबन्धः।

अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्[३]।

प्रविश पिण्डीं[४] भक्षय गृहं[५] इति यथा। विशः। विश इति मनुष्यनाम। विशति हि ते प्राप्नुवन्ति अभिलषितमर्थं[६] यत्नेन। यथा प्राकृता युक्तायुक्तविवेकशून्य-हृदया[७] विहितं कर्म प्रलुम्पन्ति तथा वयमपि इति[८] संबन्धः। प्रशब्दो मिनीमसि[९] इत्यनेन संबध्यते। हे देव दानादिगुणयुक्त वरुण। व्रतमिति कर्मनाम। कर्म परिचर्या दृष्टादृष्टसुखसाधनम्। मिनीमसि। इदन्तो मसि[१०] इति मसश्छन्दसि विषये इकारान्तत्वमिष्यते। मिनीमः मीञ् हिंसायां[११] इत्यस्य भूतकाले वर्तमानकालः छान्दसत्वात्[१२]। अवधिष्म। हतवन्तो वयमित्यर्थः। द्यवि द्यवि। अह्नो[१३] नामधेयम्। द्योतयतीति द्यु। अहन्यहनि। अतीतेषु कालेष्वित्यर्थः। एतदुक्तं भवति। शब्दादि-विषयसंसक्तहृदयाः सन्तो वयं त्वत्परिचर्यादिकर्म लुप्तवन्तः। तस्मादपचारान्मा हिंसीरित्यर्थः॥

**यत्किंचेदं वरुण दैव्ये जने-**
**ऽभिद्रोहं मनुष्याश्चरामसि।**
**अचित्ती यत्तव धर्मा युयोपिम**
**मा नस्तस्मादेनसो देव रीरिषः[१४]॥** ॥ १२ ॥

वसिष्ठो वरुणमाह। यत् किंच। चशब्दश्चिच्छब्दपर्यायः[१५]। यत्किंचित्[१६]। प्राणघातकहेतुभूतं इत्यर्थः[१७]। हे वरुण दैव्ये। समूहार्थे तद्धितः[१८]। देवसमूहे। देवेष्वि-त्यर्थः। जने[१९] जनेषु च। अभिद्रोहम्। अभिद्रोहशब्देन अपचार उच्यते। अभि-द्रोहं पापभूतम्। मनुष्या वयम्। चरामसि चराम। किंच[२०] अचित्ती। धीमती सुष्टुती इत्यादिवत्[२१] तृतीयायाः पूर्वसवर्णदीर्घः[२२]। यत् तव धर्मा। धर्मशब्दः[२३] कर्म-वचनः।

तानि धर्माणि प्रथमा[1]न्यासन्[2]।

इति यथा। कर्म परिचर्यादिरूपम्। युयोपिम। नश्यतिकर्मायम्। लुप्तवन्तो[3] वयमित्यर्थः[4]। मा इति प्रतिषेधार्थो निपातो रिरिष[5] इत्याख्यातेन संबध्यते। नः अस्मान्। तस्मात्। हेताविय पञ्चमी[6]। तस्मात् हेतोः[7]। एनसः। एतेरसुन्प्रत्ययान्तस्य[8] एतद्रूपम्। नकारोपजनश्च[9]। पापपर्यायः[10]। एति हि तत् कर्तारम्। तथा हि श्रूयते—तं विद्याकर्माणी समन्वारभेते पूर्वप्रतिज्ञा च[11]—इति। हे देव दानादिगुणयुक्त। रिरिषः[12]। रिषतिर्हिंसार्थः। मा रिरिषः[13] मा हिंसीः[14]। एतदुक्तं भवति। ज्ञानाज्ञानकल्मषापादित[15]पापबन्धनापनयन[16]पुरःसरं[17] सर्वसंपत्सुखसाधनभूतमायुरपरिमितं भक्तवत्सल देहीत्यभिप्रायः ॥

**कितवासो[18] यद्रिरिपुर्न[19] दीवि**
**यद्वा घा सत्यमुत यन्न विद्म।**
**सर्वा ता विष्य शिथिरेव देवा-**
**धाते स्याम वरुण प्रियासः[20] ॥** ॥ १३ ॥

अत्रेरार्षम्। वरुणोऽभिधीयते। वरुणो मध्यमस्थानो[21] द्युस्थानश्चास्ति[22] उभावपि स्तोतॄणामभिलषितार्थप्रदाने समर्थौ भवतः अणिमादिगुणयोगादैश्वर्यस्य विद्यमानत्वात्। तथा चोक्तं भाष्यकारेण—सर्वासु देवतास्वैश्वर्यं विद्यते[23]—इति तथा भगवानादित्यो भक्तेष्वतिवत्सलः। कितवासः[24] किन्तवास्तीति वर्तमानाः। यत् मिथ्यारूपम्। रिरिपुः। रपतेः शब्दार्थस्यैतद्रूपं[25] छान्दसम्। रेपिम। उक्तवन्तो वयमित्यर्थः। नशब्दोऽयमुपमार्थः अनर्थको[26] वा। न दीवि। दीव्यतेरेतद्रूपम्[27]। दावि[28] देवने आस्थानप्रदेशे। निर्धनाः सन्तो भृत्यानामुपजीवनार्थम्[29]। भर्तव्या हि भृत्याः सर्वथा इति मन्वादय[30] आहुः। यद्वा[31] घ। घ इति निपातः पदपूरणः[32]। वेत्यवधारणे[33]। सत्यमेव यल्लौकिकसंयानम्। उतशब्दः अप्यर्थे निपातानामनेकार्थत्वात्। यच्छब्दश्चार्थे। सत्यमपि च। यत् न विद्म[34] न जानीमः। सर्वदा सत्यवादिनो

भवामः। अनृतवादिनो मनुष्याः। तथा हि श्रूयते—सत्यसंहिता वै देवाः अनृतसंहिता मनुष्याः[१]—इति। अनृतवदने[२] ह्यनेकं पापं श्रूयते—

पञ्च पश्वनृते[३] हन्ति दश हन्ति गवानृते[४]।
शतमश्वानृते हन्ति सहस्रं[५] पुरुषानृते[६]॥

इति। अतो भगवन्। सर्वा ता। उभयत्र शेर्लोपः। सर्वाणि तानि पापानि विष्य। स्यतिरनुपसृष्टो[७] विमोचने। विष्य विमोचय[८]। अपनय इत्यर्थः। शिथिरा शिथिराणि। रश्नुतेर्लत्त्रुतिर्भवति[९]। विश्लिष्टसंबन्धीनि बन्धनानि[१०] कुरु इति शेषः। इवशब्दोऽनर्थकः। हे देव[११] दानादिगुणयुक्त। अध[१२] अनन्तरं त्वया क्षालितसर्वकल्मषाः सन्तो वयम्। ते तव। स्याम भवेम। हे वरुण प्रियासः। स्तुत्यस्तोतृत्वलक्षणे सख्ये वर्तमाना इति वाक्यशेषः। महतां हि सख्यं महतीं विभूतिं[१३] आधत्ते इत्यभिप्रायः॥

**आपो हि ष्ठा[१४] मयोभुव-**
**स्ता न ऊर्जे दधातन।**
**महे रणाय चक्षसे[१५]॥** ॥ १४ ॥

त्रिशिरसस्सिन्धुद्वीपस्य वा एतत् सूक्तम्[१६]। मार्जारनकुलादीनां पृथग्घननप्रायश्चित्तं विहितम्।

सूक्तं वाब्देवतं[१७] जपेत्[१८]।

इति नित्यकर्मणि च विधीयते। आपो देवता। आपश्च देवताकाण्डे पृथिवीस्थान[१९]देवतासु समाम्नायन्ते[२०]। आपः। प्रत्यक्षरूपत्वात् मन्त्रस्य[२१] संबोधनावगत्यर्थो हेशब्दः पूर्वं अध्याहार्यः। नित्यं[२२] बहुवचनमेतत्। नाम्नामाख्यातजत्वप्रतिज्ञानात्[२३] क्रियायोगमङ्गीकृत्य सर्वं निर्वक्तव्यम्। आप आप्नोतेः। ताभिर्हि विश्वं व्याप्तम्[२४]। तथा चाथर्ववेदे श्रूयते—

सर्वं[२५] वा इदमम्मयम्[२६]।

इति। अपामधिष्ठात्र्यो देवता आप उच्यन्ते[1]। हे आपः[2]। हिशब्दस्य हेत्वपदेशप्रभृतीनां[3] अर्थानां[4] अविद्यमानत्वात् पादपूरणार्थत्वं[5] प्रतिपद्यते। स्थ भवथ। कीदृश्यः। मयोभुवः। मय इति सुखनाम। माद्यतेरन्तर्णीतणिजर्थस्य[6] असुन्प्रत्ययान्तस्य दकारस्य यकारव्यापत्त्या[7] चैतद्रूपम्। मादयतीति[8] मयः। अन्तर्णीतण्यर्थो[9]ऽयं भवतिः[10]। मयसः सुखस्य भावयित्र्यः। प्राणिनां सुखस्य कर्त्र्य इत्यर्थः। तथा च श्रूयते—यावन्तो अप्सु[11] प्राणिनाम्[12]—इति। ताः[13]। तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः। या एवंविधाः जगदुपकारिण्यः ताः। यूयमिति वाक्यशेषः। कुत एतल्लभ्यते। प्रत्यक्षकृतत्वान्मन्त्रस्य[14]। नः अस्मान्। ऊर्जे। ऊर्क्शब्दो[15]ऽन्नवचनः। ऊर्जे अन्नाय शालिगोधूमरूपाय। दधातन। तनप्रत्ययश्छान्दसः अनर्थकः। कुतः। कुरुतनेत्यनर्थका[16] उपजना भवन्ति[17]—इति भाष्यकारवचनात्[18]। धत्त[19]। बह्वन्नमस्माकं[20] दत्तेत्यर्थः। बह्वन्नमूलत्वात् सर्वसंपदां पुरुषेण साधनीयम्। तथा च श्रूयते—तस्माद्यया[21] कया च विधया बह्वन्नं प्राप्नुयात्[22]—इति। महे महते। रणाय। रमतेरेतद्रूपम्। रमणीयाय[23]। चक्षसे। चष्टेः पश्यतिकर्मणोऽसुन्प्रत्ययान्तस्य[24] एतद्रूपम्। ककारश्चोपजनः[25]। महद्रमणीयं भगवदादित्य[26]दर्शनाय चक्षुर्धत्तेत्यनुषङ्गः[27]। एतदुक्तं भवति। लोकमातॄणां[28] युष्माकं प्रसादेनाक्षयमन्नं[29] अभिलषितं च दर्शनमस्माकमस्त्वित्याशास्यते॥

**यो वः शिवतमो रस[30]-**
**स्तस्य भाजयतेह नः।**
**उशतीरिव मातरः[31]॥** ॥ १५ ॥

यः वः[32] युष्माकं संबन्धीति शेषः। शिवतमः[33]। शिव इति सुखनाम शिम्यतेस्तर्पणार्थस्य अन्तव्यापत्तिर्वकारेण[34]। गुणाभावश्च[35]। सुखातिशयहेतुः[36]। रसः[37]। रसनेन भूयानास्वाद्यः। तस्य। षष्ठीश्रुतेः[38] एकदेशमिति वाक्यशेषः। द्वितीयार्थे वा षष्ठी। तं वा रसम्[39]। भाजयत। भज सेवायाम्। सेवयत। पाययतेत्यर्थः। इह लोके। नः अस्मान्। सर्वेन्द्रियप्रीतिसाधनभूतं युष्मदीयं रसं अस्मभ्यं दत्तेत्यर्थः। किमिव।

उशतीरिव। द्वितीयाबहुवचनमेतत् प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम्। उशत्य इव। मातरः। यथा कामयमानाः स्नेहार्द्रचेतसो मातरो[१] दृष्टादृष्टोपकारिण्यः सत्यः[२] जनाय आरोग्यादिसाधनेन[३] क्षीरादिना रसेन भाजयन्ति[४] तथा यूयमपि इति वाक्यशेषः ॥

**तस्मा अरं गमाम वो**
**यस्य क्षयाय जिन्वथ।**
**आपो जनयथा च नः[५] ॥** ॥ १६ ॥

तस्मै। यथार्थं विभक्तीः सन्नमयेत्[६]—इति भाष्यकारवचनात् विभक्तिव्यत्ययेन भवितव्यम्। चतुर्थ्येकवचनमपि द्वितीयैकवचनस्य[७] स्थाने द्रष्टव्यम्। तच्छब्देन पूर्वस्मिन् मन्त्रे प्रकृतस्य रसस्य प्रतिनिर्देशः। तं रसम्। अरम्[८]। अरंशब्दः कपिलादिषु[९] पठ्यते। तस्माद्रेफस्य लापत्त्या भवितव्यम्। अलं पर्याप्तम्। सकलमित्यर्थः। गमाम[१०] गच्छामः प्राप्नुयामः। वः युष्माकम्। यस्य रसस्य। क्षयाय। क्षयो निवासः। निवासाय। जिन्वथ। जिन्वतिः प्रीतिकर्मा। प्रीणयथ। समतिशयं प्रीतिसाधनभूतं धारयथ इति संबन्धः। हे आपः जनयथा च[११] नः अस्मान्। प्रकाशयत इत्यर्थः। अथवा जनयथ पुत्रपौत्रादिसहितानस्मात् संपादयत। अपत्यमूलं हि मर्त्यस्यामृतत्वम्। तथा हि श्रूयते—प्रजाभिरसौ अमृतत्वमश्यात्[१२]—इति ॥

**शं नो देवीरभिष्टय**
**आपो भवन्तु पीतये।**
**शं योरभि स्रवन्तु नः[१३] ॥** ॥ १७ ॥

शमिति सुखनाम। सुखरूपाः सुखहेतुभूताः। नः अस्माकम्। देवीः प्रथमाबहुवचनस्य स्थाने[१४] द्वितीयाबहुवचनमेतत्। देव्यः। देवतारूपत्वात् स्तोतॄणामभिलषितार्थप्रदायिन्यः। अथवा देव्य इति वरुणस्य पत्न्यः[१५]। तथा च श्रूयते—आपो वै वरुणस्य पत्न्य आसन्[१६]—इति[१७]। अभिष्टये। अभिपूर्वादिच्छतेः[१८] क्तिन्प्रत्ययान्तस्यैतद्रूपम्। अभिष्टये[१९] अभिलषिताय[२०]। आपो भवन्तु पीतये पानाय।

सोमपानाय इत्यभिप्रायः[१]। अभिलषितं हि सोमपानं ब्राह्मणस्य ऋणसंबन्धित्वात्[२]। तथा च श्रूयते—यज्ञेन देवेभ्यः[३] प्रजया पितृभ्यः[४]—इति। किंच शं योः। पदद्वयमेतत्[५]। शंशब्देन शमनमुच्यते। कस्य[६]। रोगाणाम्। योरिति[७] यु मिश्रणे इत्यस्य विनाशार्थ[८]-स्यान्तर्णीतण्यर्थस्य द्वितीयैकवचनस्य स्थाने षष्ठ्येकवचनं[९] पञ्चम्येकवचनं वा। यावन-मित्यवगमः[१०]। नन्वस्ति विनाशार्थस्य[११] प्रयोगः। अस्तीति ब्रूमः। युतमस्य[१२] धनं युता वा[१३] इति। नष्टमित्यर्थः। कस्य यावनम्। भयानाम्। तथा च[१४] निरुक्तभाष्य-कार[१५] आह—शमनं च रोगाणां[१६] यावनं च भयानाम्[१७]—इति। अभिशब्दः[१८] कर्मप्रवचनीयः प्रतिना समानार्थो द्रष्टव्यः। शमनं प्रति रोगाणां यावनं[१९] प्रति भया-नाम्। स्रवन्तु। स्रवतिर्गतिकर्मा। गच्छन्तु। नः अस्माकम्। रोगोपशमनं भयापनयनं च[२०] अस्माकं[२१] आपः कुर्वन्तु इत्याशास्यते॥

**ईशाना वार्याणां**
**क्षयन्तीश्चर्षणीनाम्।**
**अपो याचामि भेषजम्**[२२] ॥ ॥ १८ ॥

ईशाना ईश्वराः। वार्याणाम्[२३]। वृणोतेरेतद्रूपम्। वरणीयानां ज्योतिष्टोमादी-नाम्। तत्साध्यत्वात्तेषाम्। अथवा वरणीयानां मणिमुक्ताप्रवालादीनाम्[२४]। तत्प्र-भवत्त्वात्तेषाम्। अथवा वार्याणां वरणीयानां[२५] सर्वेषामेव लोकानां ईश्वराः प्राणरूप-त्वात्। प्राणा वा आपः[२६]—इति हि श्रूयते। क्षयन्तीः निवासयन्तीः निवसनहेतु-भूताः। चर्षणीनाम्। चर्षणीशब्दो निरुक्तो[२७] मनुष्यपर्यायः[२८]। प्रदर्शनार्थम्[२९]। चर्षणि-प्रभृतीनां प्राणिजातानाम्। कर्मणि षष्ठी। चर्षणिप्रभृतीन् प्राणिनो धारयन्ति[३०] इत्यर्थः। तन्मूलो हि सर्वप्राणिनां निवासः[३१] जीवनं च। तथा चोक्तम्—

अद्भिः सर्वाणि[३२] भूतानि जीवन्ति प्रभवन्ति च।
तस्मात्सर्वेषु दानेषु तोयदानं विशिष्यते[३३] ॥

इति। इत्थंभूता[३४] अपः याचामि। भेषजं संसारव्याधिनाशकरमौषधम्। द्विकर्मकत्वं याचतेर्दर्शितम्—पौरवं गा याचते[३५]—इति॥

**अप्सु मे सोमो अब्रवी-**
**दन्तर्विश्वानि भेषजा ।**
**अग्निं च विश्वशंभुवम्[1] ॥** ॥ १९ ॥

अप्स्विति सप्तमीबहुवचनं षष्ठीबहुवचनस्य स्थाने । अपाम् । मे मम । सोमः मध्यमस्थानानाम्[2] वृष्टिलक्षणानां उदकानां[3] पतिः अब्रवीत् । अन्तः । अन्तःशब्दो मध्यवचनः । मध्ये । अपामिति संबन्धः । विश्वानि सर्वाणि । भेषजा[4] भेषजानि सर्वरोगोपशमनसाधनभूतान्यौषधानि । तथाह्यायुर्वेदविदो विदग्धादिषु[5] दोषेषु ताः प्रयुञ्जते[6]। अग्निं च बाडवं उदकेन्धनम्[7]। सामुद्रिकाणां अपां मध्ये स्थितमिति संबन्धः । वैद्युतं वा मेघोदरगतानामपाम्[8] । जाठरं वा प्राणायामधारणविजृम्भण[9]-विसृतानामपाम् । कीदृशम् । विश्वशंभुवम्[10]। विश्वशब्दः सर्वपर्यायः । शमिति सुख-नाम । भवतिरन्तर्णीतण्यर्थः । सर्वभूतजातस्य सुखस्य भावयितारम्[11]। कर्तारमित्यर्थः । अतो भेषजमिमं याचे इति संबन्धः ॥

**आपः पृणीत भेषजं**
**वरूथं तन्वे मम ।**
**ज्योक् च सूर्यं दृशे[12]॥** ॥ २० ॥

आपः पृणीत । प्रीङ् तर्पणे[13]। तर्पयत इत्यर्थः। भेषजं ज्वराद्यपनयनसमर्थमौष-धम् । वरूथं[14] वरणीयम् । तन्वे शरीराय । मम ज्योक्[15]। ज्योक्शब्दो[16] दीर्घकाल-वचनः। चशब्दः पादपूरणार्थः। दीर्घकालम्[17]। सूर्यं परमात्मरूपम्[18]। दृशे । दृशे विख्ये च[19] इति तुमर्थे[20] निपात्यते। द्रष्टुम् । एतदुक्तं भवति । युष्मत्प्रसादादपगतसर्वरो-गोऽहं चिरकालमाराध्य भगवन्तं आदित्यं सायुज्यं गमिष्यामि[21] इत्यभिप्रायः ॥

**इदमापः प्रवहत**
**यत्किंच दुरितं मयि ।**
**यद्वाहमभिदुद्रोह**
**यद्वा शेप उतानृतम्[22] ॥** ॥ २१ ॥

इदं दुरितं इति संबन्धः। हे आपः प्रवहत प्रकर्षेणापनयत। रोधयतेत्यर्थः[१]। यत्किंच[२] मयि[३]। पापमिति वाक्यशेषः। कीदृशं तत्। उच्यते। यत् वा अहं अभिदुद्रोह। द्रुह[४] जिघांसायाम्। अज्ञानेन[५] प्राणिजातं जघान। यद्वा शेपे शप्तवानहम्। उक्तवान्। उतानृतं अनृतमपि यत्। तत्सर्वं नाशयतेत्यर्थः[६]। युष्मत्प्रसादादपगतसर्वकल्मषो भूयासमित्यर्थः ॥

**आपो[७] अद्यान्वचारिषं**
**रसेन समगस्महि।**
**पयस्वानग्न आ गहि**
**तं मा सं सृज वर्चसा[८] ॥** ॥ २२ ॥

अद्य अस्मिन् काले। अन्वचारिषं अनुचरामि। अहमाश्रितो युष्मानित्यर्थः। युष्मदीयेन रसेन समगस्महि। बहुवचनमेकवचनस्य स्थाने। समगंसि सगतोऽहं मद्भाग्योपचयविशेषेण यत्किंचित्। पयस्वान्। पय इति उदकनाम। पिबतेर्वा प्यायतेर्वा। पीयते हि तत् आप्याययति च। क्षीरेऽपि समानं निर्वचनम्। तद्वान् वैद्युत मेघोदरस्थः। त्वमपि[९] हे अग्ने आगहि आविर्भव। आगत्य च मा मां[१०] भवत्परिचर्यासक्तहृदयं संसृज संगमय। वर्चसा दीप्त्या। अथवा ब्राह्मेण तेजसा। गतमेतत्[११]। युष्मत्प्रसादादहं[१२] क्षपितसमस्तकल्मषः सर्वसंपत्संगतो धर्मानुष्ठानयोग्यश्च संजातः। इति सूक्तस्य समस्तस्यार्थकथनम् ॥

इति वाररुचे निरुक्तसमुच्चये

द्वितीयः कल्पः[१३]॥

---

# वाररुचनिरुक्तसमुच्चयः

## तृतीयः कल्पः[१]



[२]यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद्वषट्करिष्यन्[३]—इति श्रुतेरतः परं दर्शपूर्णमासयाज्यानुवाक्या आज्यभागप्रभृतिस्विष्टकृत्पर्यन्ता[४] व्याख्यायन्ते ।

**अग्निर्वृत्राणि जङ्घन-**
**द्रविणस्युर्विपन्यया ।**
**समिद्धः शुक्र आहुतः[५] ॥** ॥ १ ॥

भरद्वाजस्यार्षम् । अग्निः । अग्रशब्दान्नयतेश्च । अग्रणीः । तथा[६] च श्रूयते—अग्निर्वै देवानां सेनानीः[७]—इति । वृत्राणि । वृणक्तेः[८]। व्यतिषज्य तिष्ठन्तीति वृत्राणि पापानि[९] इति । तथा हि श्रूयते[१०]—व्यतिषक्त इव वै पुरुषः पाप्मना[११]—इति[१२]। पापानि मनोवाक्कायकर्मकृतानि[१३] यजमानस्य । अथवा वृत्राणि रक्षांसि । तानि च वृत्वा व्याप्य सर्वं शेरते । अथवा वृत्रोऽसुरः त्वष्टुः पुत्रः । मेघो[१४] वा धूमादिसंघातः । अस्मिन् पक्षे छान्दसमेतद्रूपम् । जङ्घनत्[१५]। क्रियाभ्यासविषये यङ् द्रष्टव्यः[१६]। अत्यर्थं हन्ति । ननु च इन्द्रस्य वृत्रवधरूपं कर्म । अथास्य कर्म रसानुप्रदानं वृत्रवधः[१७]—इति । सत्यमेवम् । तथापि संभोगरूपेण साहाय्यं प्रतिपद्यमानो वृत्रमसुरं[१८] त्वष्टुः पुत्रं[१९] मेघं वा अत्यर्थं हन्ति इत्युच्यते । पूर्वस्मिन् निर्वचनद्वये युक्तमेव । तथा हि श्रूयते—अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः[२०]—इति । अग्नी रक्षो हन्ति[२१]—इति च । द्रविणस्युः । द्रवतेर्गत्यर्थस्य द्रविणो धनम् । गम्यते हि तत् । सर्वैः प्राप्तुमिष्यते[२२] इत्यर्थः । द्रविणो[२३] धनं हविर्लक्षणमात्मन[२४]

इच्छति इति क्यच्प्रत्ययः[१]। ततः क्याच्छन्दसि[२] इत्युप्रत्ययः। द्रविणस्युः। आज्यभागं कामयमान इत्यर्थः। विपन्यया। पनायतिः[३] स्तुतिकर्मा। विपन्यया विविधया चित्रया स्तुत्या[४]। स्तूयमान[५] इति शेषः। समिद्धः। इन्धी दीप्तौ। सम्यग्दीपितः। शुक्रः। शुक्रशब्दो निरुक्तो द्वितीये कल्पे[६]। अतितेजस्वितया[७] विराजमान इत्यर्थः। आहुतः। ह्वयतिरर्चतिकर्मा[८]। आभिमुख्येन[९] हुतः। अस्माभिः अर्चितः अभिष्टुत[१०] इत्यर्थः। स्तूयमाना हि देवता वीर्येण वर्धन्ते[११]—इति श्रूयते। वीर्यवृद्धाऽग्निः[१२] वृत्राद्यं[१३] हन्तीति संबन्धः ॥

**त्वं सोमासि सत्पति-**
**स्त्वं राजोत वृत्रहा।**
**त्वं भद्रो असि क्रतुः[१४]॥** ॥ २ ॥

गौतमस्यार्षम्। प्रत्यक्षकृतोऽयं मन्त्रः मध्यमपुरुषयोगात्। त्वमिति च प्रयुज्यमानत्वात्[१५]। त्वं हे सोम असि भवसि। कीदृशोऽसि। सत्पतिः। सतां वेदोदितकर्मनिरतानां पतिः पाता पालयिता[१६] वा। त्वं राजा। कस्य। ओषधीनां ब्राह्मणानां च[१७]। तथा हि श्रूयते—सोम ओषधीनामधिपतिः इति[१८]। सोमराजानो ब्राह्मणाः[१९]—इति च[२०]। विराजतीति वै राजोच्यते। उतशब्दोऽप्यर्थे। स च समुच्चयार्थे द्रष्टव्यः। वृत्रहा वृत्रं हतवान् च[२१]। ननु च इन्द्रो वृत्रहेत्युच्यते। उच्यतां कामम्। अयमपि सोमो मध्यमस्थानस्येन्द्रस्य[२२] साहाय्यं वृत्रवधे प्रतिपद्यमानो[२३] वृत्रहेत्युच्यते[२४]। अथवा वृत्रस्य पापस्य रक्षसश्च हन्ता। किं च त्वं भद्रः भजनीयो भूतानां असि भवसि। क्रतुश्चासि इति संबन्धः। प्रकाशयिता[२५] चासीत्यर्थः। अथवा क्रतुसाधनभूतत्वात् क्रतुरित्युच्यते[२६]। त्वत्साधना हि सर्वक्रतवः। स त्वं प्रसीदास्माकमिति[२७] शेषः ॥

**अग्निः प्रत्नेन मन्मना**
**शुम्भानस्तन्वं स्वाम्।**
**कविर्विप्रेण वावृधे[२८]॥** ॥ ३ ॥

विरूपस्यार्षम्। अहविर्भागियं देवता। अत्यल्पमिदमुच्यते। अस्मिन् प्रकरणे हविर्भाज एव देवता निरुच्यन्ते[१]। अग्निः। अग्रं पथ्यं यज्ञेषु प्रणायते इत्यग्निः। प्रत्नेन। प्रत्न इति पुराणनाम। पुराणेन। केन[२]। मन्मना। मन्यतेः स्तुतिकर्मणो[३] मनिन्प्रत्ययान्तस्य[४] एतद्रूपम्। त्रयीलक्षणेन[५] स्तोत्रेण। स्तूयमान इति शेषः। शुम्भानः शोभमानः[६]। दीप्यमान इत्यर्थः। तन्वं तनुं स्वाम्[७]। उभावपि शब्दौ[८] द्वितीयैकवचनान्तौ विभक्तिव्यत्ययेन[९] तृतीयार्थे द्रष्टव्यौ। तन्वा स्वया स्वेन विग्रहेण तेजोमयेन। कविः क्रान्तदर्शनः। क्रमतेर्गतिकर्मणः। क्रान्तं दर्शनं यस्य सः[१०]। लोकपालत्वात्[११] लोकावेक्षणतत्परः इत्यर्थः। अथवा कवतेः शब्दकर्मणः कविः। प्राणरूपत्वात् सर्वशब्दानां प्रयोक्ता इत्यर्थः। विप्र इति मेधाविनामान्यत्र। इह तु विपूर्वस्य प्रा पूरण इत्यस्य छन्दसि वा सर्वोपाधिव्यभिचारात् कप्रत्ययः[१२]। विप्रेण पूर्णेन। केन। सामर्थ्यात् वीर्येण। कुत एतत् ज्ञायते। स्तूयमाना वीर्यवन्तः[१३]— इति श्रुतेः। परिपूर्णेन वीर्येण वावृधे[१४]। स्तूयमान इति संबन्धः॥

**जुषाणो अग्निराज्यस्य वेतु[१५]॥ ॥ ४ ॥**

जुषाणः[१६]। महत्या प्रीत्या युक्त इत्यर्थः। तथा हि श्रूयते—एतद्वा अग्नेः प्रियं धाम यद्घृतम्[१७]—इति[१८]। अग्निः आज्यस्य। षष्ठीश्रुतेः भागं इति शेषः[१९]। आज्यस्य भागम्[२०]। वेतु। वेतिरनेकार्थः। इह अशने पाने वा वर्तते। अश्नातु[२१] पिबतु वा द्रवद्रव्यत्वात्॥

**सोम गीर्भिष्ट्वा वयं**
**वर्धयामो वचोविदः।**
**सुमृळीको न आ विश[२२]॥ ॥ ५ ॥**

गौतमस्यार्षम्। हे सोम गीर्भिः। गृणातेः स्तुतिकर्मणो रूपम्। प्रहर्षजननीभिः। त्वा त्वां वयं[२३] वर्धयामः[२४]। वचोविदः वचसां वेदितारः। यैर्वचोभिस्तुष्यसि तेषां इति संबन्धः। सुमृळीकः। मृळ सुखने। ताच्छील्ये ईकन्प्रत्ययः[२५]। शोभनं

अर्पितः[१] प्रह्लादनशील इत्यर्थः। नः अस्मान् स्तोतॄन्। आविश। वमनविरेचनयोरकर्ता सन् आभिमुख्येन प्रविश। इत्येवं रसरूपे सोमे योज्यम्। चन्द्रमसि तु आविश[२] अनेकार्थत्वाद्धातूनां आभिमुख्येन ह्लादय इति योज्यम् ॥

**जुषाणः सोम आज्यस्य हविषो वेतु[३] ॥ ॥ ६ ॥**

जुषाणः सोमः आज्यस्य भागं[४] हविषो हूयमानस्य वेतु अश्नातु। पिबत्वित्यर्थः ॥

**अग्निर्मूर्धा दिवः ककुत्**
**पतिः पृथिव्या अयम्।**
**अपां रेतांसि जिन्वति[५]॥ ॥ ७ ॥**

अनेन भगवतोऽग्नेः पृथिवीस्थानस्य संभोगरूपेण त्रैलोक्यैश्वर्यं[६] प्रतिपाद्यते। अग्निः अग्रणीः। देवानां[७] प्रधानभूतः। तथा च श्रूयते—अग्निर्वै देवानां मुखं सुहृदय[८]तमः[९]—इति। मूर्धा। मूर्धशब्दः प्रधानवचनः स्वामिपर्यायः[१०]। स्वामी। कस्य। दिवः द्युलोकस्य। ककुत्। ककुच्छब्दः स्वामिवचनः। कस्य। सामर्थ्यात्[११] अन्तरिक्षस्य। पतिः स्वामी पृथिव्याः भूलोकस्य। अयमिति सन्निकर्षार्थनिर्देशात्[१२] आहवनीयात्मना[१३] अवस्थितोऽग्निरभिधीयते। एकमेव ज्योतिस्त्रिषु लोकेषु प्रकाशते इत्यर्थः। इत्थंभूतोऽग्निः अपाम्। संबन्धषष्ठ्येषा[१४]। संबन्धीनि रेतांसि। रेतःशब्देन सारभूतं वस्तु उच्यते। यथा ह्यन्नपानस्य[१५] अभ्यवहृतस्य रसादिक्रमेण सारभूतं तेजो निष्पद्यते एवमपां[१६] संबन्धीनि पुरोडाशादीनि हवींषि रेतांसीत्युच्यन्ते। तानि जिन्वति[१७]। जिन्वतिः प्रीतिकर्मा[१८]। प्रीत्यात्र भक्षणं लक्ष्यते[१९]। भक्षयति इत्यर्थः[२०]। अथवा मध्यमरूपेण अपां रेतांसि तत्कारणानि स्थावरजङ्गमानि[२१] जिन्वति[२२] तर्पयति इत्यर्थः ॥

**भुवो यज्ञस्य रजसश्च[२३] नेता**
**यत्रा नियुद्भिः सचसे शिवाभिः।**

**दिवि मूर्धानं दधिषे स्वर्षां**
**जिह्वामग्ने चकृषे हव्यवाहम्[१]॥ ॥ ८ ॥**

त्रिशिरस आर्षम्। भुवः[२]। नेदं पृथिवीनामधेयस्य भूशब्दस्य[३] रूपम्। किं तर्हि। भवतेः[४] लङि वर्णव्यापत्तिः अडभावश्च। अभवः भवसि। यज्ञस्य दर्शपूर्णमासादेः। रजसश्च। रजःशब्देन[५] अत्रोदकमुच्यते। रञ्जयति भूतानि। तर्पयतीत्यर्थः[६]। उदकस्य च वृष्टिलक्षणस्य नेता। तथा च श्रूयते[७]—अग्निर्वा इतो वृष्टिमुदी[८]रयति[९]—इति। कदा[१०] पुनर्यज्ञस्य रजसश्च नेता भवति। उच्यते[११]। यत्रा नियुद्भिः। सांहितिकं दीर्घत्वम्। यत्र यस्मिन् काले। नियुद्भिः। नियुतो वायोः[१२]—इत्यादिष्टोपयोजनत्वात् नियुच्छब्देन वायवो लक्ष्यन्ते। नियुद्भिः वायुभिः। सचसे भजसि। सच इति सेवार्थे। शिवाभिः[१३]। शिव इति सुखनाम। सुखहेतुभिः। यत्रेति श्रुतेस्तत्रेत्यध्याहार्यम्[१४]। तत्र तस्मिन् काले। यज्ञस्य रजसश्च नेता[१५] भवसीति संबन्धः। किंच दिवि द्युलोके। मूर्धानं प्रधानाङ्गम्। वायुभिरुत्थापितः सन्। दधिषे धारयसि[१६]। जाज्वल्यमान इति शेषः। कीदृशं मूर्धानम्। स्वर्षाम्। स्वर्शब्देनादित्य[१७] उच्यते। स्वस्थानस्यादित्यस्य स्रष्टारमित्यर्थः। किंच[१८] जिह्वां ज्वालाम्। हे अग्ने। चकृषे करोषि[१९]। हव्यवाहं हविषां वोढ्रीम्। तदा हविश्च[२०] वहसीत्यर्थः॥

**प्रजापते न त्वदेतान्यन्यो**
**विश्वा जातानि परि ता बभूव।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु**
**वयं स्याम पतयो रयीणाम्[२१]॥ ॥ ९ ॥**

हिरण्यगर्भस्यार्षम्। प्रजापतिर्मध्यमस्थानः[२२]। प्रजानां जरायुजादीनां वृष्टिदानादिद्वारेण पाता पालयिता[२३] वा प्रजापतिः। पातेस्तृनि ह्रस्वत्वं[२४] पालयतेरन्तलोपश्च। धात्वन्यत्वमात्रम्। अर्थः स एव[२५]। हे प्रजापते। नेति निपातः अर्धर्चान्तेन बभूवेत्यनेन संबध्यते[२६]। त्वत्[२७] त्वत्तः। एतानि भूतानि जरायुजादीनीत्यर्थः[२८]। अन्यः विश्वा। शेश्छन्दसि[२९] बहुलं[३०] इति शेर्लोपः। विश्वानि[३१] सर्वाणि जातानि।

परिशब्दो बभूवेत्याख्यानेन[१] संबध्यते। ता[२] तानि। तच्छब्दश्रुतेर्योग्यार्थसंबन्धो[३]. यच्छब्दोऽध्याहार्यः[४]। यानि त्वया सृष्टानि तानि इति संबन्धः[५]। बभूव। परिपूर्वो भवतिः रक्षणार्थः। नञोऽत्र संबन्धः। न परिबभूव न[६] पर्यरक्षत्[७]। न परिभवति। न रक्षति। त्वमेव रक्षितुं[८] समर्थः इत्यर्थः। लोकवदिहापि रतिपूर्वा वाञ्छा। यत्-कामाः यत् स्वर्गादिफलं कामयमानाः। ते तुभ्यम्। जुहुमः। तत् नः अस्माकम्। अस्तु भवतु। किंच वयं स्याम भवेम। पतयो रयीणाम्। रयिरिति धननाम। धनानां हिरण्यादीनाम्। धनमूलत्वात्[९] सर्वक्रियाणाम्। तथाह्युक्तम्—

धनमूलाः क्रियाः सर्वाः[१०]।

इति[११]॥

**तवेमे लोकाः प्रदिशो दिशश्च**
**परावतो निवत उद्वतश्च।**
**प्रजापते विश्वसृग्जीवधन्यः[१२]**
**स त्वं नो देव प्रतिहर्य हव्यम्[१३]॥** ॥ १० ॥

अनेन प्रजापतेर्विभूतिरुच्यते। इमे पृथिव्यादयस्त्रयोऽपि[१४] लोकास्त्वद्वशे वर्तन्ते। न केवलमन्तरिक्षमेव[१५]। पृथिव्यादिषु लोकेष्वन्तर्भूतस्यापि समुद्रादेर्भेदत्वेन विवक्षा। त्रैलोक्ये[१६]ऽसावर्णवः—इति यथा। प्रदिशः। प्रोता दिग्भिः अवान्तर[१७]-दिशः प्रदिशः। दिशश्च प्राच्याद्यष्टावपि दिशः। त्वदधीना[१८] एवेत्यर्थः। किंच परावतः[१९]। परावच्छब्दो दूरवचनः[२०]। तेन च तत्स्थाः पदार्थाः प्रतिनिर्दिश्यन्ते। मञ्चाः क्रोशन्ति—इति यथा। दूरप्रतियोगित्वात् समीपशब्दोऽध्याहार्यः। दूर-स्थानि समीपस्थानि चेत्यर्थः[२१]। कानि पुनस्तानि। उच्यते। निवत उद्वतश्च। उप-सर्गाच्छन्दसि[२२] धात्वर्थे[२३]—इति वतिः। निवतो[२४] निर्गतानि नदनदीसमुद्रादीनि। उद्वतश्च उद्वतान्युच्छ्रितानि[२५] हिमवद्धेमकूटप्रभृतीनि। यत्किञ्चिदन्तरण्डवर्ति वस्तु[२६]-जातं तत्सर्वं त्वदधीनमेव इत्यर्थः। इत्थंभूतः[२७] सन् हे प्रजापते विश्वसृक्[२८] विश्वस्य भूतजातस्य[२९] स्रष्टः। जीवधन्यः। जीवं प्राणं[३०] प्राणिनां धिनोति धारयति यो

रसानुप्रदानेन स जीवधन्य उच्यते। स त्वमिदं जुह्वादिपात्रविनिःसृतं नः अस्माकम्[१]। देव दानादिगुण। प्रतिहर्य। हर्यतिः प्रेप्साकर्मा। प्रेप्सया च ग्रहणं लक्ष्यते। प्रतिगृहाण। भक्षयेत्यर्थः। हव्यं हविराज्यरूपम्।

**अग्नीषोमा सवेदसा**
**सहूती वनतं गिरः।**
**सं देवत्रा बभूवथुः[२]॥** ॥ ११ ॥

गौतमस्यार्षम्। अग्निना[३] सह सोमः स्तूयते। तथा ह्युक्तम्—अथास्य सांस्तविका देवा इन्द्रः सोमो वरुणः पूषा बृहस्पतिः[४]—इति। अग्नीषोमा। ईदग्नेः सोमवरुणयोरुत्तरपदयोः[५]—इतीकारः। सोमस्य च षत्वम्। हे[६] अग्नीषोमा। आमन्त्रितप्रथमाद्विवचनस्य सुपां सुलुक्[७]—इत्याकारः। अग्नीषोमौ[८]। सवेदसा। समानशब्दस्य सभावः छन्दसि विधीयते[९]। वेद इति धननाम। विद्यते ज्ञायते सर्वेण। वेदयतीति वा। तद्वन्तं प्रकाशयतीत्यर्थः। हविषि चात्र धनसमानार्थत्वात् समानं निर्वचनम्। समानं वेदो धनं हविराख्यं ययोः तौ समानवेदसौ[१०] समानधनौ। समानहविष्काविन्यर्थः[११]। तयोः संबोधनम्। सहूती। ह्वयतेः शब्दकर्मणः। हूतिराह्वानम्। स्तुत्यर्थो[१२] वा हूतिः। स्तुतिः। समानाह्वानौ समानस्तुती वा। वनतं भजतम्। शृणुतं इत्यर्थः। गिरः। गृणातेः स्तुतिकर्मणो गीः। गिरः स्तुतीः। समः बभूवथुरित्यनेन[१३] संबन्धः। देवत्रा। देवादिभ्यो द्वितीयासप्तम्यर्थे[१४] त्राप्रत्ययः[१५]। देवेषु। बभूवथुः। संबभूवथुः। समित्ययं[१६] एकीभावे वर्तते। देवानां मध्ये भिन्नस्थानावपि[१७] सह स्तूयेथे इत्यर्थः॥

**युवमेतानि दिवि रोचना-**
**न्यग्निश्च सोम सक्रतू अधत्तम्।**
**युवं सिन्धूँरभिशस्तेरवद्या-**
**दग्नीषोमावमुञ्चतं गृभीतान्[१८]॥** ॥ १२ ॥

गौतमस्यार्षम्। अग्नीषोमयोः सामर्थ्यं कथ्यते[१]। युवं युवाम्[२]। एतानीति साभिनयं दर्शयति। एतानि ग्रहनक्षत्रतारावृन्दानि[३]। दिवि द्युलोके रोचनानि। रुच दीप्तौ। दीप्यमानानि। अग्निः। चशब्दः कर्मोपसंग्रहार्थः। त्वं चेति शेषः। हे सोम। सक्रतू। क्रतुशब्दः कर्मवचनः प्रज्ञावचनश्चास्ति। समानकर्माणौ[४] समानप्रज्ञौ वा। अधत्तं अधारयतं धारयथः। निरतिशयसामर्थ्ययोगेन[५] युवयोरुभयोर्माहात्म्येन ध्रियन्त इत्यर्थः। किंच युवं युवामेव सिन्धून्[६]। सिन्धवो नद्यः समुद्रा वा। सिन्धून् स्यन्दनस्वभावान्। गङ्गाद्यान्[७]। अन्ये क्षीरोदधिप्रभृतीन् समुद्रान्[८] इति[९]। तांश्च धारयथो लोकस्थित्यर्थम्। माहात्म्यकथनानन्तरं बुद्धौ विपरिवर्तमानमभिलषितमभिधीयते[१०]। अभिशस्तेः। अभ्युपसर्गपूर्वस्य शसु हिंसायामित्यस्य क्तिन्प्रत्ययान्तस्यैतद्रूपम्[११]। अभिहननरूपात्[१२]। अवद्यात्। अवपूर्वात् वदतेः पापे अभिधेये अवद्यमिति निपात्यते[१३]। अवद्यात् पापात् संसाराख्यात्। हे अग्नीषोमौ अमुञ्चतम्। लोडर्थे लङ्। मुञ्चतम्। गृभीतात्। हृग्रहोर्भश्छन्दसि[१४] इति हकारस्य भकारादेशो[१५] विधीयते। गृहीतात् संसारपाशबन्धादस्मानित्यर्थः[१६]। युवयोः प्रसादान्मुक्तिं गमिष्याम इत्यभिप्रायः॥

**इन्द्राग्नी अवसा गत-**
**मस्मभ्यं चर्षणीसहा।**
**मा नो दुःशंस ईशत[१७]॥** ॥ १३ ॥

वसिष्ठस्यार्षम्। इन्द्रेणाग्निः सह स्तूयते। तथा ह्युक्तम्—अथास्य सांस्तविका देवा अग्निः सोमो वरुणः[१८]—इत्यादि। हे इन्द्राग्नी। अवसा। अवते रक्षणार्थस्य तर्पणार्थस्य वा असुन्प्रत्ययान्तस्यैतद्रूपम्। हेतावियं तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। रक्षणार्थं तर्पणार्थं वेत्यर्थः। आगतम्। छान्दसश्छकारलोपः[१९]। आगच्छतम्। अस्मभ्यम्। विभक्तिविपरिणामः कार्यः। अस्माकं स्वभूतं यज्ञमित्यर्थः। चर्षणीसहा। चर्षणयो मनुष्याः। ते च सामर्थ्यादिह शत्रुभूता गृह्यन्ते। षह मर्षणे। अभिभवे छन्दसि[२०] इति वचनात् सहिरभिभवार्थः। मनुष्याणां शत्रु-

भूतानामयष्टृणामभिभवितारौ । नाशयितारावित्यर्थः । मा इति प्रतिषेधार्थो निपात ईशतेत्याख्यातेन[1] संबध्यते । नः अस्माकं दुःशंसः । दुरित्ययमुपसर्गो निन्दायां वर्तते । दुष्टस्य निन्दारूपस्य वचनस्य शंसितारो दुःशंसा[2] नास्तिका उच्यन्ते । ईशत । ईश ऐश्वर्ये[3]। ईश्वरा मा भूवन् । अधिकगुणा मा भूवन्[4]। साधूनस्मांस्ते[5] युवयोः प्रसादेन[6] दुर्जना मा पराभवन्त्वित्यर्थः ॥

**गीर्भिर्विप्रः[7] प्रमतिमिच्छमान**
**ईट्टे रयिं यशसं पूर्वभाजम् ।**
**इन्द्राग्नी वृत्रहणा सुवज्रा**
**प्र नो नव्येभिस्तिरतं देष्णैः[8]॥ ॥ १४ ॥**

वसिष्ठस्यार्षम् । गीर्भिः स्तुतिभिः । हविर्भिश्च । युवामाराधयन्निति संबन्धः। यतो हविर्भाक्त्वमनयोर्विधीयते । उक्तं चास्मिन् प्रकरणे—हविर्भाज एव सर्वा देवता निरुच्यन्ते[9]—इति । स्तुतिपूर्वत्वाद्याच्ञायास्तत्पूर्वमभिलषितार्थमाह । विप्रः । विप्र इति मेधाविनाम । मेधावी । सकृच्छ्रुतितो ग्रन्थग्रहणसामर्थ्यान्वितः स्तुतिकर्मणि कुशलः। प्रमतिं[10] प्रकृष्टां युक्तायुक्तविवेकनिरूपणां संसारबन्धच्छेदमतिं[11] इच्छमानः[12] वाञ्छन् । ईट्टे । ईडिरध्येषणकर्मा[13] प्रार्थनार्थः। प्रार्थयते मन्त्राक्षररूपेण[14]। किम् । रयिं धनम् । कीदृशम् । यशसं यशःसाधनम्[15]। कीर्तिकरमित्यर्थः । पूर्वभाजं पूर्वेषां पित्रादीनामपि भजनीयम् । अनुष्ठानयोग्यमित्यर्थः । अतः हे इन्द्राग्नी । देवताद्वन्द्वे च[16]—इति दीर्घत्वं विधीयते । वृत्रहणा[17]। आमन्त्रितप्रथमाद्विवचनस्य सुपां[18] सुलुक्[19]—इत्याकारः । वृत्रहणौ वृत्रस्यासुरस्य पापस्य[20] मेघस्य वा हन्तारौ । साहचर्येणाग्निरपि[21] वृत्रहेत्युच्यते । सुवज्रा[22] सुवज्रौ । पूर्वेण न्यायेनेन्द्रस्य संबन्धः । शोभनेन वज्रेण सहितौ सुवज्रौ[23]। आयुधसामान्यवचनो[24] वज्रशब्दः । स्वायुधौ । प्रशब्दस्तिरतमित्येतेन संबध्यते । नः अस्मान्[25]। नव्येभिः नव्यैः । नु[26] स्तुतौ इत्यस्यैतद्रूपम्[27]। स्तुत्यैः[28]। अथवा नव्य इति नवनाम । नवैः[29]। अन्येभ्योऽदत्तपूर्वैरित्यर्थः[30]। प्रतिरतं प्रवर्धयतम् । देष्णैः[31]। ददातेः कृत्यार्थे ष्णुप्रत्ययः। देयैः[32]। कैः । सामर्थ्याद्धनैः[33]। युवयोः प्रसादेन रक्ष्यो भविष्यामीत्यभिप्रायः ॥

**एन्द्र सानसिं रयिं[१]**
**सजित्वानं सदासहम् ।**
**वर्षिष्ठमूतये भर[२]॥** ॥ १५ ॥

मधुच्छन्दस आर्षम्। आकारो मन्त्रान्त्येनाख्यातेन संबध्यते। हे इन्द्र[३] इरादानादिगुण[४]। सानसिम्। सानसिशब्दो द्वितीये[५] कल्पे निरुक्तः[६]। संभजनीयं सर्वभूतानाम्। अत्यन्तोज्वलनमित्यर्थः। रयिं धनम्। सजित्वानम्। सहशब्द-पूर्वस्य जयतेः क्वनिन्प्रत्ययान्तस्येदं रूपम्। सजयम्। जयकरमित्यर्थः। सदा-सहम्। षह मर्षणे। सर्वकार्यक्षमम्। वर्षिष्ठं अतिशयेन वृद्धम्। अक्षयमित्यर्थः[७]। ऊतये। अवते[८] रक्षणार्थस्य तर्पणार्थस्य वेदं रूपम्। रक्षणार्थं तर्पणार्थं वेत्यर्थः। भर। हरतेर्हकारस्य भकारादेशः[९]। आकारस्यात्र संबन्धः। आहर। धनं मह्यमि-त्यर्थः। अथवा अनेन मन्त्रेण पुत्रः प्रार्थ्यते। हे इन्द्र। सानसिं संभजनीयं[१०] सर्व-भूतानामाश्रयणीयम्। रयिं पुत्राख्यं धनम्[११]। सजित्वानं सम्यक् शत्रूणां रोगादीनां च जेतारम्। सदासहं सर्वदा मर्षणशीलम्[१२]। क्षमावन्तमित्यर्थः। प्रदर्शनार्थमिदम् सर्वैरात्मगुणैरुपेतम्[१३]। वर्षिष्ठं अतिशयेन[१४] वृद्धं श्रुतेन। सर्वविद्यापारगमित्यर्थः। ऊतये अवनाय पितॄणामात्मनश्च। तथा हि[१५]—पुत्रः पुरु त्रायते। निपरणाद्वा[१६]। पुन्नरकम्। ततस्त्रायत इति वा[१७]—इत्याचार्यवचनम्।

पुन्नाम्नो[१८] नरकाद्यस्मात् पितरं त्रायते सुतः[१९]।
तस्मात्पुत्र इति प्रोक्तः पूर्वमेव स्वयंभुवा[२०]॥

इति मनुवचनम्। आभर आहर अस्माकम्। इति विभुत्वान्मन्त्रपदानां सर्वथा योजना कर्तव्या[२१]॥

**प्र ससाहिषे पुरुहूत शत्रू-**
**ञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु ।**
**इन्द्रा भर दक्षिणेना वसूनि**
**पतिः सिन्धूनामसि रेवतीनाम्[२२]॥** ॥ १६ ॥

जयस्यार्षम्। प्र ससाहिषे। इह सहतिरभिभवे[१]। प्रकर्षेणाभ्यभवः[२]। अभिभवसि। हे पुरुहूत[३]। पुरु इति बहुनाम। ह्वयतिः स्तुतिकर्मा। बहुस्तुत। बहुभिः[४] यजमानैः[५] स्तूयमानो वीर्यवृद्धः सन् बलवन्नित्यर्थः। शत्रून्[६] वृत्रनमुचिप्रभृतीन्। ज्येष्ठः अतिशयेन वृद्धः प्रशस्यो वा। ते तव। शुष्म। शुष्म इति बलनाम[७]। शुषेः मन्प्रत्ययः[८]। परस्य सांयौगिकं[९] हस्त्यादिकं शोषयतीति शुष्मः। अतः अतिशयवचनसामर्थ्यात्[१०] इह अस्मदीये यज्ञे। रातिः दानं[११] हविषः अस्तु। अस्मत्प्रत्तेन हविषा परितुष्टः सन् हे इन्द्र। आभर[१२] आहर। अस्माकमिति शेषः[१३]। दक्षिणेन[१४]। दाशतेर्दानार्थस्य[१५] दक्षिणो हस्तः। दीयत एतेन देवपि[१६]तृमनुष्येभ्यः[१७]। तेन दक्षिणेन हस्तेन। वसूनि। वस्विति धननाम। वसतेराच्छादनार्थस्यौणादिक[१८] उप्रत्ययः। आच्छादयति तत्सर्वं दोषजातम्[१९]। वसूनि धनानि। कस्मादेवमुच्यते। यस्मात्त्वं पतिः स्वामी। सिन्धूनाम्। सिन्धवो नद्यः। इह सामर्थ्यात् अन्तरिक्षचारिण्यो[२०] गृह्यन्ते। अन्तरिक्षचरीणां[२१] बाहुदेत्येवमादीनाम्[२२]। भूचरीणाम्[२३] वा। अथवा सिन्धवः समुद्राः। क्षीरोदधिप्रभृतीनां[२४] समुद्राणां वा। असि भवसि। रेवतीनां[२५] मणिमुक्ताप्रवालादिना[२६] धनेन धनवतीनाम्। समुद्रपक्षे पुलिङ्गत्वात् धनवतामिति व्याख्येयम्[२७]।

**वि न इन्द्र मृधो जहि**
**नीचा यच्छ पृतन्यतः।**
**यो अस्माँ अभिदास-**
**त्यधरं गमया तमः[२८]॥** ॥ १७ ॥

शासस्यार्षम्[२९]। विशब्दो जहीत्यनेनाख्यातेन संबध्यते। नः अस्माकम्। शत्रुभूतान् इति शेषः। हे इन्द्र। मृध इति संग्रामनाम। मृधं करोतीति णिच्प्रत्ययः[३०]। तदन्तात् क्विप्। ततश्च णेरनिटि[३१] इति[३२] टिलोपः। द्वितीयाबहुवचनं एतत्। मृधः संग्रामकारिणः प्रतियोधनसमर्थान्। जहि। हन्तेरेतद्रूपम्। विशब्दस्यात्र संबन्धः। विजहि। विगतजीवितान् कुरु इत्यर्थः। नीचा नीचैः। यच्छ[३३] नियमय[३४]। निगृहाण। अपसारय इत्यर्थः[३५]। पृतन्यतः। पृतनाशब्दात् संग्रामवचनात्

इच्छार्थे क्यच्प्रत्ययः[१]। ये संग्रामं कर्तुं कामयन्ते[२] तान्[३] निगृह्य मुञ्च इत्यर्थः। यश्च तिरोभूयास्मान् अभिदासति[४]। दासतिः[५] क्षयार्थः। अभिदासति[६] आभिमुख्येन क्षपयति। बाधत[७] इत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तं महादुर्जनं अधरं निकृष्टं तमः गमय। मारय इत्यभिप्रायः॥

**मृगो न भीमः कुचरो गिरिष्ठाः**
**परावत आ जगन्था परस्याः।**
**सृकं संशाय पविमिन्द्र तिग्मं**
**वि शत्रून्ताळिह वि मृधो नुदस्व[८]॥ ॥ १८ ॥**

जयस्यार्षम्। इन्द्रोऽभिधीयते। प्रत्यक्षकृतोऽयं मन्त्रः मध्यमपुरुषयोगात्। इन्द्रश्च मध्यमस्थानः[९]। असावेव वायुः। मृगः। मृगेर्गतिकर्मणो[१०] मृगः। शीघ्रगतिरित्यर्थः। उपरिष्टादुपचारत्वात्[११] नशब्द उपमार्थः[१२]। मृग इव। यथा मृगः सिंहो व्याघ्रो वा। भीमः भयंकरः। कुचरः। कुत्सितप्राणिवधमुद्दिश्य[१३] चरतीति कुचरः[१४]। गिरिष्ठाः। गिरिः पर्वतः विन्ध्यादिः। तत्र स्थायी[१५]। परावतः। दूरनामेदम्[१६]। दूरात स्वस्मात् स्थानात् तूर्णमामिषार्थमागच्छेत् तद्वत्। यदा कुचरो गिरिष्ठा इति इन्द्रस्यैव विशेषणे क्व न चरति इति वकारस्य संप्रसारणे नकारलोपे च कुचरः। अणिमादियोगान्न क्वचिच्चरति[१७]। सर्वत्र चरतीत्यर्थः। गिरिष्ठाः। गिरिर्मेघः। तस्मिन्नगन्तव्ये[१८] स्थातुं शीलमस्येति गिरिस्थायी। समीपसप्तम्येषा[१९]। कूपे गर्गकुलं[२०] इतिवत्[२१]। प्रत्यक्षकृतत्वान्मन्त्रस्य एकवाक्यतायै[२२] यत्तच्छब्दावध्याहार्यौ[२३]। यस्त्वं कुचरो गिरिष्ठाः स त्वं परावतः दूरात् आ जगन्थ आगच्छ। परस्याः[२४]। परावत इत्येतद्विशेषणम्[२५]। परस्याः परावतः अत्यन्तदूरात् स्वर्गाख्यात् स्थानात् अन्तरिक्षाद्वा इत्यर्थः। त्वमागत्य चरुभिराराधितो वीर्यवृद्धस्सन्[२६] सृकम्। वज्रनामैतत्। शो तनूकरणे। समित्येष निरित्येतस्य स्थाने द्रष्टव्यः। निःशाय तीक्ष्णीकृत्य[२७]। पविम्। एतदपि वज्रनाम। पुनरुक्तिदोषपरिहारार्थं क्रियायोगमङ्गीकृत्य प्रवर्तते।

अहं पार्थो धनञ्जयः।

इति यथा। पवतिर्गतिकर्मा। पविं[1] गन्तारं शत्रुकायेषु[2]। हे इन्द्र। तिग्मम्। तिग्मशब्दस्तीक्ष्णवचनः। तिग्मं स्वभावेन तीक्ष्णधारम्। तेन वज्रेण। विशब्दस्ताळ्हीत्येतेन संबध्यते। शत्रून्[3] दैत्यादीन्। ताळ्हि। ताडृ[4] इति वधकर्मा। विजहि मारय। ततश्च[5] विशब्दो नुदस्व इत्यनेन संबध्यते। मृधः। निरुक्तं[6] एतच्छब्दरूपम्[7]। संग्रामकारिणः प्रतियोधनसमर्थान्[8]। विनुदस्व[9] प्रेरय। इतः स्थानादपनयेत्यर्थः[10]॥

**महाँ[11] इन्द्रो य ओजसा**
**पर्जन्यो वृष्टिमाँ इव।**
**स्तोमैर्वत्सस्य वावृधे[12] ॥ ॥ १९ ॥**

वत्सस्यार्षम्। महान्[13] महतेर्दानार्थस्य। ददात्यसौ भक्तातिनीभूतेभ्यो[14] भूतानुग्राहकतया जानन्। तथा च श्रूयते[15]—इतः प्रदानं ह्यमुष्मिन् लोके उपजीवन्ति[16]—इति। इन्द्रो दानादिगुणः। ओजसा। ऊर्जतेर्न्यग्भावार्थस्य[17]। बलपर्यायः[18]। न्यग्भावयत्येतत् शत्रुजातम्[19]। ओजसा बलेन शत्रुक्षयकरेण। युक्त इति शेषः। महाबल इत्यर्थः[20]। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः[21]। स महेन्द्रः। पर्जन्यः। तर्प[22]यतीति[23]। तृपेराद्यन्तविपर्ययेण तकारलोपे च जन्यप्रत्ययान्तं[24] एतद्रूपम्[25]। पर्जन्यो[26] वृष्टिमानिव। यथा पर्जन्यो मध्यमस्थानः वर्षेणापर्यन्तधारात्मना क्रमेण वर्धते एवं स्तोमैः स्तुतिभिः निरतिशयप्रीतिजननीभिः। वत्सस्य[27] मम वावृधे वर्धते स्तूयमानः।

**भुवस्त्वमिन्द्र ब्रह्मणा महान्**
**भुवो विश्वेषु सवनेषु यज्ञियः।**
**भुवो नॄंश्च्यौत्नो विश्वस्मिन् भरे**
**ज्येष्ठश्च मन्त्रो विश्वचर्षणे[28]॥ ॥ २० ॥**

वैकुण्ठस्यार्षम्। भुवः। नेदं पृथिवीनामधेयस्य भूशब्दस्य रूपम्। किं तर्हि। भवतेर्लङि छान्दसत्वादडभावः[29] वर्णव्यापत्तिश्च। अभवः[30]। त्वं हे इन्द्र ब्रह्मणा परिवृद्धेन त्रयीलक्षणेन। स्तूयमान इति शेषः। महान् महत्वं प्राप्तवान्।

महत्त्वं च वृत्रवधादियोगात्। तथा च श्रूयते—इन्द्रो वै वृत्रं हत्वा महानभवत्[१]—इति। यो हि भुवनहितं कर्म करोति स महान् भवति। भुवः। पूर्ववत् प्रक्रिया-कल्पः। अभवः भवसि। विश्वेषु सवनेषु। सवनमिति यज्ञनाम। यज्ञेषु[२] ज्योतिष्टोमादिषु। अथवा प्रातःसवनादिषु। यज्ञियः यष्टव्यः। तथा च श्रूयते—ऐन्द्रो वै यज्ञः। इन्द्रो यज्ञस्य देवता[३]—इति। भवतिरत्र अभिपूर्वो द्रष्टव्यः। कुत एतल्लभ्यते। अर्थसामर्थ्यात। किं पुनरत्रार्थसामर्थ्यम्। उच्यते। विश्वस्मिन्[४] भरे[५]। भर इति[६] संग्रामनाम। तत्सन्नियोगेन नृशब्दश्च शत्रुभूतेषु मनुष्येषु वर्तते। शत्रोरप्यभिभवनमन्वेष्टव्यम्[७]। शातयितव्यत्वात्[८]। अतोऽत्र भवतिरभिपूर्वः[९] शत्रुबाधने वर्तते। इदमत्र वक्तव्यम्। उपसर्गाः किं द्योतका उत वाचका इति। केचिदाहुः उपसर्गा द्योतका इति[१०]। उपशब्दः समीपवचनः। समीपस्था नामाख्यातयोः अर्थं विशेषेण सृजन्ति बोधयन्ति द्योतयन्ति इत्युपसर्गाः। कथम्। अनेकार्थत्वाद्धातूनां प्रकरणानुरोधिनमर्थमभिदधतः शब्दस्योपसर्जनमात्रे[११] साहाय्यं प्रतिपद्यमानाः तस्यैवार्थस्य द्योतका[१२] इति। वाचका इत्यपरे। कुतः। अनेकप्रकारा ह्युपसर्गाणामर्थाः प्रकर्षादयः प्राहुरमितानर्थविशेषान् नामाख्यातयोः। पृथक् प्रयोगेऽपि[१३] वाचकत्वमेषां दृष्टम्।

यदुद्वतो निवतो यासि[१४]।
निष्कौशाम्बिः[१५]

इति[१६]। एवं अभ्युपसर्गप्रसङ्गेन[१७] सर्वेषामुपसर्गाणां[१८] सामान्येन मनाक् स्वरूपमुक्तम्। प्रकृतमभिधीयते। अभ्यभवः अभिभवसि। नॄन् मनुष्यान् शत्रुभूतान्। च्यौत्न इति बलनाम च्यावयति स्वस्मात् स्थानात् अरातिमिति। च्यौत्नमस्यास्तीति मत्वर्थीयोऽच्प्रत्ययः[१९]। बलवान्। महाबल इत्यर्थः। क्व शत्रूनभिभवसि। उच्यते। विश्वस्मिन् सर्वस्मिन् भरे। भर इति सङ्ग्रामनाम भरतेर्वा हरतेर्वा। भ्रियन्ते[२०] हि तदर्थं योधादयः[२१] ह्रियन्ते वा योधादीनां[२२] प्राणाः। ज्येष्ठः च देवानां प्रधानभूतः। तथा च श्रूयते—इन्द्रः खलु वै श्रेष्ठो देवानामुपदेशनात्[२३]—इति। मन्त्रः। मनुते बोधते कृतित्वात् बोद्धा च स्तोतृवर्गं सर्वं ज्ञात्वा सर्वं वा शब्दराशिं लोकपालत्वात्

लोकवृत्तान्तं वा। विश्वचर्षणे विश्वस्य सर्वस्य भूतजातस्य शुभाशुभस्य चर्षणिः चायिता[1] द्रष्टा च। तस्येदं संबोधनं हे विश्वचर्षणे। इत्थंभूतं त्वां[2] स्तुम इति वाक्यशेषः ॥

**पिप्रीहि देवाँ उशतो यविष्ठ**
**विद्वाँ ऋतूँॠतुपते यजेह।**
**ये दैव्या ऋत्विजस्तेभिरग्ने**
**त्वं होतॄणामस्यायजिष्ठः[3]॥** ॥ २१ ॥

त्रितस्यार्षम्। प्रीञ् तर्पणे। प्रीणय देवान् यागाङ्गभूतान्। उशतः। वश कान्तौ। कामयमानान्। स्वं स्वं[4] भागमिति शेषः। यविष्ठ अतिशयेन[5] युवन्। विद्वान् जानन् स्वमधिकारमसद्भक्तता च। किं च ऋतून् वसन्तादीन्। ऋतुपते ऋतूनां[6] पालयितः[7]। तैः सह संस्तवदर्शनात्। तथा चोक्तम्—अथास्य सांस्तविका देवा इन्द्रः सोमो वरुणः[8] पर्जन्य ऋतवः[9]—इति। यज इहास्मिन् लोके। कस्मादेवमुच्यते। यस्मात् दैव्याः देवानां[10] स्वभूता ऋत्विजः अध्वर्युप्रभृतयः। तेभिः तैः। तृतीयाबहुवचनमेतत् षष्ठीबहुवचनस्य स्थाने द्रष्टव्यम्। तेषां मध्ये। हे अग्ने। त्वमेव होतॄणां होमं कुर्वतां असि आयजिष्ठः[11]। आङ् मर्यादायाम्। मर्यादया यथाशास्त्रं अतिशयेन यष्टा त्वमेव यतः ततस्त्वां वयमेवं ब्रूम इति।

**अग्ने यदद्य विशो अध्वरस्य होतः**
**पावकशोचे वेष्ट्वं हि यज्वा।**
**ऋता यजासि महिना वि यद्भू-**
**र्हव्या वह यविष्ठ या ते अद्य[12]॥** ॥ २२ ॥

भरद्वाजस्यार्षम्। प्रत्यक्षकृतोऽयं मन्त्रः। मध्यमपुरुषयोगात्। त्वमिति चैतस्य[13] सर्वनाम्नः प्रयुज्यमानत्वात् संबोधनावद्योतनार्थो हेशब्दः प्रयोक्तव्यः। हे अग्ने। अग्निरग्रं प्रणयनात्। स्थानं[14] स्वर्गाख्यं निरुपमं सुकृतिनो नयति[15] पारयत्येनश्चेति। नयतेर्द्विकर्मकत्वस्मरणात्[16] प्रयोगः। तस्येदं संबोधनम्। हे अग्ने। अद्य[17] अस्मिन् काले। विशः। विश प्रवेशने[18]। माहात्म्येन[19] कृत्स्नस्य जगतः प्रवेष्टा[20] व्याप्ता।

अध्वरस्य। ध्वरतिर्हिंसाकर्मा[१]। हिंसा[२] यस्य नास्ति सोऽध्वरः। कुत एतत् ज्ञायते। तत्रभवन्तो मीमांसका[३] आहुः—चोदनालक्षणोऽर्थो धर्मः[४]—इति। स्मर्यते च[५]—

तस्माद्यज्ञे वधोऽवधः[६]।

इति[७]।

न वा उ एतन्म्रियसे[८]।

इति च मन्त्रलिङ्गात्। शास्त्रवशादहिंसा[९] कर्मणो यज्ञस्य दर्शपूर्णमासदेः। होतः। त्वमिति शेषः[१०]। पावकशोचे पावयितृ शोधयितृ शोचिर्दीप्तिर्यस्य सः पावकशोचिः। शुचेरिसिप्रत्ययः[११]। छान्दसः सकारलोपः। ततः सम्बुद्धिगुणः[१२]। पावकशोचे। वेः। वेतेः कान्त्यर्थस्य। कान्तो ह्यसौ देवानाम्। तथा च श्रूयते[१३]—शुचिमध्वरं देवा जोषयन्ते[१४]—इति। कान्तस्य। न केवलमद्यैव[१५] होता यज्ञस्य। किं तर्हि। त्वं हि[१६]। हि शब्दोऽवधारणार्थः। त्वमेव यज्वा यष्टा पूर्वस्मिन्नपि काले सर्वयज्ञस्य। यस्मात्[१७] इति श्रुतेः तस्मादित्यध्याहार्यम्[१८]। तस्मात् ऋता। ऋतमिति सत्यनाम। ततस्तृतीयैकवचनस्य सुपां सुलुक्[१९] इत्याकारः[२०]। ऋतेन सत्येन। यथातथमित्यर्थः। तथा च श्रूयते—त्वं हि वेत्थ यथातथं[२१]—इति। यजासि। पञ्चमो लकारः। यज यागाङ्गभूतान् देवान्। महिना[२२]। महिन इति महन्नाम। प्रथमैकवचनस्य सुपां सुलुक्[२३] इत्याकारः। महान्। विशब्दो भूरित्यनेन[२४] संबध्यते। यच्छब्दः चार्थे। स च हव्याशब्दात् परो द्रष्टव्यः। विभूः। निग्रहानुग्रहसमर्थो विभुरित्युच्यते[२५]। हव्या। शेर्लोपः[२६]। हव्यानि च। वह प्रापणे।[२७] प्रापय देवान् प्रति। यविष्ठ अतिशयेन युवन्। या यानि ते त्वया नेतव्यानि। अद्य अस्मिन् काले। तानीति संबन्धः। हविर्वहनं हि भगवतोऽग्नेः प्रथमकर्म। तथा ह्युक्तम्—अथास्य कर्म वहनं हविषां[२८]—इति॥

इति वाररुचे निरुक्तसमुच्चये

तृतीयः कल्पः[२९]॥

---

# वाररुचनिरुक्तसमुच्चयः

## चतुर्थः कल्पः[१]



[२]एकत्रिंशद्विधं मन्त्रं यो वेत्यृक्षु स मन्त्रवित्[३]।

इति वचनात् एकत्रिंशद्विधा मन्त्रा व्याख्यायन्ते ।

दैव्याः शमितार उत मनुष्या आरभध्वम्[४]। उप नयत मेध्या दुरः। आशासाना मेधपतिभ्यां मेधम्। प्रास्मा अग्निं भरत। स्तृणीत बर्हिः। अन्वेनं माता मन्यताम्। अनु पिता। अनु भ्राता सगर्भ्यः। अनु सखा सयूथ्यः। उदीचीनाँ अस्य पदो निधत्तात्। सूर्यं चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतात्। दिशः श्रोत्रम्। अन्तरिक्षमसुम्। पृथिवीं शरीरम्। एकधास्य त्वचमाच्छयतात्। पुरा नाभ्या अपिशसो वपामुत्खिदतात्। अन्तरेवोष्माणं वारयतात्। श्येनमस्य वक्षः कृणुतात्। प्रशसा बाहू। शला दोषणी। कश्यपेवांसा। अच्छिद्रे श्रोणी। कवषोरू स्रेकपर्णाष्ठीवन्ता। षड्विंशतिरस्य वङ्क्रयः। ता अनुष्ठ्योच्च्यावयतात्। गात्रंगात्रमस्यानूनं कृणुतात्। ऊवध्यगोहं पार्थिवं खनतात्। अस्ना रक्षस्संसृजतात्। वनिष्ठुमस्य मा राविष्ट। उरूकं मन्यमानाः। नेद्वस्तोके तनये। रविता रवच्छमितारः। अध्रिगो शमीध्वम्। सुशमि शमीध्वम्। शमीध्वमध्रिगो[५]।

इति प्रैषः[१]। विश्वामित्रस्यार्षम्। दैव्या देवानां स्वभूताः अग्रिगुप्रभृतयः। हे शमितारः। उत मनुष्याः[२] अध्वर्युप्रभृतयः। सर्व एव यूयं इमं पशुं मारयितुं आरभध्वम्। आरभ्य अथोपनयत उपगच्छत[३]। मेध्याः। मेध इति यज्ञनाम[४]। तत्र भूताः। दुरः द्वाराणि यज्ञगृहद्वाराणि। चात्वालोत्करयोः[५] मध्यमित्यर्थः। आशासानाः[६] कामयमानाः। स्वं स्वं भागमिति शेषः। मेधपतिभ्याम्। मेधो यज्ञः। तत्साधनभूतः पशुरपि मेध उच्यते[७]। तस्य पती[८] स्वामिनौ अग्नीषोमौ[९]। तयोरर्थाय। मेधं मेधसाधनं पशुम्[१०]। प्रशब्दः पुरस्तादर्थे वर्तते। अनेकार्थत्वादुपसर्गाणाम्[११]। कुत एतज्ज्ञायते। तस्योन्मुकं पुरस्ताद्धरन्ति[१२]—इति श्रुतेः। पुरस्तात्। अस्मै। तादर्थ्ये चतुर्थ्येषा। अग्निमुल्कां भरत[१३] हरत। स्तृणीत[१४] बर्हिः। यत्रैष निहन्यते तत्र बर्हिर्दर्भास्तृणीत[१५]। अनुशब्दो मन्यतामित्येतेन संबध्यते। एनं मातानुमन्यतां वधार्थं अस्योत्क्रमार्थम्। अनु पिता। पिता चानुमन्यतां[१६] इत्यनुषङ्गः सर्वत्र। अनु भ्राता। भ्राता चानुमन्यताम्[१७]। कीदृशो भ्राता। सगर्भ्यः[१८]। समाने गर्भे भवः[१९] सगर्भ्यः[२०]। स हि महान् सगर्भ्यः[२१]। अनु सखा सखा चानुमन्यताम्। कीदृशोऽसौ। सयूथ्यः। यूथशब्दः[२२] संघातवचनः। समाने यूथे भवः सयूथ्यः। उदीचीनाँ अस्य मार्यमाणस्य[२३] पशोः पदः पादान्। निधत्तात्। तस्य तात्[२४]—इति तादादेशः सर्वत्र। निधत्त। सूर्यं चक्षुर्गमयतात्। सूर्यप्रभवत्वात्[२५] सूर्यमेवास्य चक्षुर्गमयत। सर्वेन्द्रियाणामेवंधर्मत्वेऽपि वचनं यथान्यायं कारणपरिग्रहार्थम्। सर्वं हि विनश्यत् कारणं गच्छति। वातं प्राणमन्ववसृजतात्। मुखनासिकाभ्यां यो वायुर्निस्सरति सोऽस्य प्राणोऽभिप्रेतः। दिशः प्रति श्रोत्रम्। अन्तरिक्षं[२६] प्रति असुं प्राणं[२७] शरीरधारणम्[२८]। पृथिवीं प्रति शरीरम्। अवसृजतेत्यनुषङ्गः सर्वत्र। एकधा एकेन प्रकारेण। अखण्डिताम्[२९]। अस्य त्वचं आच्छद्यतात्[३०]। पुरा नाभ्या[३१] नाभेरपिशसः आवर्तरूपात् वपां उत्खिदतात्[३२] उद्धरत। अन्तरेवोष्माणं वारयतात्[३३] मुखनासिकानिश्चारिणं वायुमस्य वारयत। निरुच्छ्वासं[३४] संज्ञपयेत्यर्थः। श्येनादयः शब्दा उपमानार्थत्वेनोपादीयन्ते। श्येनं श्येनाकारम्। अस्य वक्षः कृणुत कुरुत। प्रशसा[३५]। द्विवचनस्य सुपां सुलुक्[३६] इत्याकारः[३७]। प्रकर्षेण शस्यते[३८] हन्यते अनेनेति[३९] प्रशः शस्त्रमुच्यते[४०]। स्वधिती[४१] वा

•शस्राकारावित्येके। अथवा[१] प्रशसा[२] प्रशस्तौ बाहू। कृणुत इत्यनुषङ्गः सर्वत्र। शला दोषणी[३] शलाकाकारे दोषणी। दीर्घे इत्यर्थः। कश्यपा इव अंसौ[४]। अच्छिद्रे[५] श्रोणा। साकल्यमेवाच्छिद्रत्वम्। कवषोरू कवषा ऊरू। स्रेकपर्णा आष्ठीवन्ता। स्रेकः करवीरः। तत्पर्णाकारौ[६] आष्ठीवन्तौ[७]। तौ च कृत्स्नौ इत्यर्थः। षड्विंशतिरस्य वङ्क्रयः पर्शवः। ता अनुष्ठ्या अनुष्ठानेन यत्नेन। कृत्स्ना उच्च्यावयतात् उत्कृन्तत। एवं गात्रं गात्रमस्य अनूनं अनतिरिक्तं च। कृणुतात्[८] कृणुत[९]। ऊवध्यगोहम्। भक्षितं तृणादि यदजीर्णं पशोरुदरे तिष्ठति तदूवध्यम्। तद्यस्मिन् गुह्यते प्रच्छाद्यते[१०] स ऊवध्यगोहः। तं च। पार्थिवं पृथिव्यां भवं गर्तम्[११]। खनतात्। अस्ना। असृक्शब्दस्य लोहितवचनस्य पदादिसूत्रेणासन्नादेशः[१२]। अस्ना लोहितेन। रक्षः संसृजतात्[१३] संयोजयत[१४]। तद्धि रक्षसां[१५] भागः। वनिष्टुं अस्य[१६] वपासमीपे[१७] सन्तं वपाखनने मा राविष्ट मा लाविष्ट। उरूकं विस्तीर्णम्। वपालक्षणं चैतदित्येवं[१८] मन्यमानाः। एवं च कुर्वताम्। नेत्। इच्छब्दोऽवधारणार्थः। न इत्[१९] नैव। वः युष्माकम्। तोके[२०] तनये[२१]। द्वे अप्येते[२२] अपत्यनामनी। पौनरुक्त्यपरिहारार्थं[२३] तोकशब्देन पुत्रः अभिधीयते। तनयशब्देन[२४] च पौत्रः। बह्वर्थं एकवचनम्[२५]। पुत्रेषु पौत्रेषु च। पुत्राणां[२६] पौत्राणां च मध्ये। कश्चित् रविता शब्दकरः। रवत्। रु शब्दे। शब्दयिष्यति। हे शमितारः। एतज्ज्ञात्वा[२७] हे अध्रिगो। प्रदर्शनार्थमिदं अध्रिगुग्रहणम्। अध्रिगुप्रभृतयः शमितारः। शमीध्वं शमयत। सुशमि शमीध्वं[२८] शमितं च शमयत। मा शङ्कां कुरुध्वं हिंसेति। धर्म एव सा हिंसा। शास्त्रेण विहितत्वात्। अस्य च पशोरुत्कर्षो[२९] भवति। तथा च स्मर्यते श्रूयते च—

यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितिं[३०] पुनः[३१]। इति।

हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति[३२]। इति॥

**एह्यू षु ब्रवाणि ते-**
**ऽग्न इत्थेतरा गिरः।**
**एभिर्वर्धास इन्दुभिः[३३]॥ ॥ २ ॥**

इत्याह्वानम्। भरद्वाजस्यार्षम्। आकारः सन्निकर्षार्थः[१]। एहि आगच्छ। अस्मयज्ञं इति[२] शेषः। उकारः पदपूरणः। सुब्रवाणि शोभनं सूनृतं वचनं ब्रवाणि वदानि। ते[३] त्वद्गुणसंयुक्तम्। स्तुतिं इति शेषः[४]। अत[५] एव हे अग्ने[६] त्वं तेभ्यः शृणु इत्यभिप्रायः। कस्मादिति चेत् यस्मात् इत्था। इत्था इति सत्यनाम। सत्यवचनमस्मदीयम्। सत्यरूपत्वात्तुष्टिकरमित्यभिप्रायः। अन्येषां तु इतराः असत्याः सत्याद्विपरीतवृत्तयः। गिरः वाचः। विपरीतत्वान्न प्रीतिकरा इत्यभिप्रायः[७]। श्रुत्वा चानन्तरं एभिः तार्तीयसवनिकैः[८]। इन्दुभिः सोमैः[९]। वर्धासे। पञ्चमो ऌकारः। वर्धसे[१०] वर्धस्व। एतदुक्तं भवति। स्तुतिभिः स्तूयमानः[११] पीत्वा च सोमं[१२] वृद्धः सन् देवद्विषो जहि इत्याहूयसे इति॥

**नकिरिन्द्र त्वदुत्तरो**
**न ज्यायाँ अस्ति वृत्रहन्।**
**नकिरेवा यथा त्वम्[१३]॥** ॥ ३ ॥

इति स्तुतिः। वामदेवस्यार्षम्। गुणगुणिसंबन्धप्रतिपादनं स्तुतिरुच्यते। नकिः इति न इत्येतस्य[१४] प्रतिषेधवचनस्य अकच्प्रत्ययान्तस्य रूपम्[१५]। नास्ति इत्यर्थः। हे इन्द्र। त्वत् त्वत्तः। उत्तरः उत्कृष्टः। देवेषु इत्यर्थः। कुत एतत्। इन्द्रो वै देवानामोजिष्ठो बलिष्ठः[१६]—इति श्रुतेः। किंच न ज्यायान् ज्यायानपि नास्ति। कुतः। महत्त्वयोगात्। हे वृत्रहन्। वृत्रमसुरं त्वष्टुः पुत्रं मेघं[१७] वा। किं[१८] बहुना। नकिरेवा यथा त्वम्। यादृशोऽसि त्वं तादृशोऽपि नास्ति। त्वत्तुल्योऽपि न कश्चित्त्रैलोक्ये[१९] विद्यत इत्यर्थः[२०]।

**मोघमन्नं विन्दते अप्रचेताः**
**सत्यं ब्रवीमि वध इत्स तस्य।**
**नार्यमणं पुष्यति नो सखायं**
**केवलाघो भवति केवलादी[२१]॥** ॥ ४ ॥

इति निन्दा। भिक्षोरार्षम्[१]। मोघं व्यर्थं[२] निष्फलम्। अन्नं विन्दते लभते। भुङ्क्ते इत्यर्थः[३]। अप्रचेताः[४] अप्रज्ञः। प्रकर्षेण अजानन् धर्ममित्यर्थः। सत्यं ब्रवीमि। यदेतदुक्तं तत् सत्यमेव। अथ वध इत्। वध इति वज्रनाम। इच्छब्दः अवधारणार्थः[५]। वर्जयति प्राणानिति वज्रः[६]। एव। स अन्नलाभः अभ्यवहारः। तस्य अभ्यवहर्तुः। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः उत्तरेऽर्धर्चे[७] योजनीयः। नार्यमणं[८] पुष्यति। अरीणां भयान्निर्हन्तारं अग्निं न पुष्यति[९] नार्चयति। नाग्नौ जुहोति। वैश्वदेवादि न करोति इत्यर्थः। नो सखायं नापि सखायं सखिभूतमतिथिं पूजयति[१०]। केवलाघो भवति। अघमिति पापनाम। आङ्पूर्वात् हन्तेः उपसर्गस्य ह्रस्वत्वेन हकारस्य च घत्वेन अघम्। आभिमुख्येन हन्ति तत्कर्तारं कदाचित्। केवलं पापरूपो भवति। केवलादी। केवलशब्दः असहायवचनः[११]। केवलभोजी। असहायभोजीत्यर्थः। स मोघमन्नं विन्दते। तत्तस्य वधो भवति इति संबन्धः। कुतः एतत्।

अहमन्नमन्नमदन्तमद्मि[१२]।

इति[१३] मन्त्रलिङ्गात्। यस्य[१४] चाग्नौ न क्रियते यस्य च ग्रन्न....न तद्भोक्तव्य-मित्यर्थः[१५]।

**गौरीर्मिमाय सलिलानि तक्ष-**
**त्येकपदी द्विपदी सा चतुष्पदी।**
**अष्टापदी नवपदी बभूवुषी**
**सहस्राक्षरा परमे व्योमन्**[१६]॥ ॥ ९ ॥

इति सङ्ख्या। दीर्घतमस आर्षम्। गौरीः। छान्दसत्वात् सुलोपाभावः। वाङ्नामैतत्। वाङ्मध्यमस्थाना। मेघजन्मा[१७] स्तनयित्नुलक्षणोपचारः। अधिष्ठात्री गौरीत्युच्यते[१८]। सा मिमाय। माङ्माने। मिमीते। कृत्स्नं जगदिति शेषः। सलि-लानि[१९] वृष्टिलक्षणानि। तक्षती। तक्षतिः करोतिकर्मा। कुर्वती। एकपदी। पदं

स्थानम्। आश्रय इत्यर्थः[१]। किं तत्। अन्तरिक्षम्[२]। तद्धि तस्याः स्थानम्। तद्य-स्याः सा[३] एकपदी। द्विपदी[४]। मध्यमेन सहिता। वृत्रवधमाचरन्[५] वृष्टिकर्मणि साहाय्यमस्याः प्रतिपद्यते। सा चतुष्पदी दिग्भिः। दिशोऽप्यवकाशदानेन अस्य वृष्टिकर्मणि सहकारिकारणत्वं प्रतिपद्यन्ते। अष्टापदी अवान्तरदिग्भिश्च। ताश्चैवं तद्धर्माणः। नवपदी। ताभिश्चादित्येन च। असावपि यदा द्यां रश्मिभिः पर्यावर्तते[६]। अथ वर्षति[७]—इति वचनात् वृष्टिकर्मणि साहाय्यमस्याः प्रतिपद्यते। तत एवमुच्यते नवपदी। बभूवुषी। एकपद्यादिक्रमेण वर्धमाना इत्यर्थः। सहस्राक्षरा। सहस्रमिति बहुनाम। अक्षरमित्युदकनाम अक्षयत्वात्। तथा हि[८] श्रूयते—तस्माद्द्यमाना पीयमाना आपो न क्षीयन्ते[९]—इति। सहस्राक्षरा बहूदका। क्रमेण[१०] उपचीयमानेन वर्षेणापर्यन्तधारात्मना कृत्स्नं जगद्व्याप्नोति इत्यर्थः। परमे प्रकृष्टे। व्योमन्। सुपां सुलुक्[११] इति सप्तम्येकवचनस्य[१२] लुक् द्रष्टव्यः[१३]। व्योमनि अन्तरिक्षे[१४] स्वस्मिन् स्थाने। स्थिता इति वाक्यशेषः।

**तच्चक्षुर्देवहितं**
**शुक्रमुच्चरत्।**
**पश्येम शरदः शतं**
**जीवेम शरदः शतम्[१५]॥ ॥ ६ ॥**

इत्याशीः। अयं मन्त्रो द्वितीये कल्पे व्याख्यातः[१६]।

**बभ्रुरेको विषुणः सूनरो युवा-**
**ञ्ज्यङ्क्ते हिरण्ययम्।**
**योनिमेक आ ससाद द्योतनो-**
**ऽन्तर्देवेषु मेधिरः[१७]॥ ॥ ७ ॥**

इति कर्म। काश्यपस्यार्षम्। सोमः स्तूयते। उत्तरेणार्धर्चेन[१८] वैद्युतोऽग्निः। बभ्रुः बभ्रुवर्णः[१९] सोमः। एकः असहायः। विषुणः विषमः। विषमशब्देन समर्थ

उच्यते। एक एव कर्मसु समर्थ इत्यर्थः। सूनरः शोभनाः[१] कर्तव्यपदार्थज्ञा नराः मनुष्या अध्वर्य्वादयो यस्य संबन्धित्वेन सन्ति स[२] सूनरः। पदकारेणैतत्पदं[३] नावगृहीतम्। तथापि भाष्यकारवचनात्[४] पदकारमनादृत्यैतन्निरुक्तम्। युवा[५]। यौतेः कनिन्प्रत्ययान्तस्य[६]। प्रयौति मिश्रयति कर्माणि प्रातःसवनादीनि। इतरोऽपि युवा तरुणः स्यात्[७]। क्षिप्रं कर्माणि मिश्रयति। अञ्जि व्यञ्जनशीलः[८]। अङ्क्ते अभिव्यञ्जयति[९]। उत्पादयति इत्यर्थः। हिरण्ययम्। हिरण्यशब्देनोदकमुच्यते[१०]। कुत एतत्। उदकमपि हिरण्यमुच्यते[११]—इति भाष्यकारवचनात्। हिरण्ययं उदकसंघातम्। एतदुक्तं भवति। इन्द्रादिदेवतातृप्तिद्वारेण सर्वप्राणिव्यञ्जनहेतुभूतमुदकं सोमः संपादयति इत्यर्थः। योनिम्। योनिशब्देनान्तरिक्षमुच्यते। अन्तरिक्षम्। एको[१२] वैद्युतोऽग्निः। आ ससाद आगतवान्। प्राप्तवान् इत्यर्थः। द्योतनः। द्युत दीप्तौ। दीप्यमानः। अन्तः। अन्तःशब्दो मध्यमवचनः। देवेषु[१३] मध्यमस्थानेषु वाय्वादिषु। मेधिरः। मेधाशब्दो धनवचनः। प्रज्ञार्थोऽप्यस्ति[१४] मेधाशब्दः। मत्वर्थीयो रप्रत्ययः[१५]। मेघोदरगतेन उदकलक्षणेन धनेन धनवान् प्रज्ञावान् वा[१६]। प्रज्ञाहेतुभूतः। अतिबहलतिमिरावकुण्ठितायां रात्र्यां घटपटादिभावानां प्रकाशयिता इत्यर्थः[१७]।

**अहं भुवं वसुनः पूर्व्यस्पति-**
**रहं धनानि सं जयामि शश्वतः।**
**मां हवन्ते पितरं न जन्तवो-**
**ऽहं दाशुषे वि भजामि भोजनम्[१८]॥ ॥ ८ ॥**

इति विकत्थना[१९]। अर्थाभिव्यक्त्यर्थमस्याः[२०] प्रथमं तावदाख्यानं प्रस्तौति। प्रजापतेर्दुहिता विकुण्ठा[२१] नाम असुरक्षेत्रे संभूता पुत्रमिन्द्रसममिच्छन्ती किल बहु तपश्चचार[२२]। तस्यास्तपसो महानुभावात् इन्द्रत्वभयाच्च[२३] देवैश्वर्यमपहाय इन्द्र एव पुत्रो जज्ञे। स जन्मान्तरतिरोहितपूर्वस्मरणानुसन्धानः[२४] सन् सप्तगुभिर्नाम[२५] ऋषिभिरभिष्टुतो हृष्टात्मा च महात्मानुकीर्तनपुरःसरमेतेन श्लाघते। अतः सार्थीयोऽयं मन्त्रः। उत्तम-

पुरुषयोगात्[१] अहमिति चैतस्य सर्वनाम्नः श्रवणात् इन्द्र एव ऋषिः। इन्द्र एव देवता। कुत एतत्।

उत्तमस्य तु[२] वर्गस्य य ऋषिः सैव[३] देवता[४]॥

इति वचनात्। अहं इति आत्मानं साभिनयं दर्शयति। भुवम्। नेदं पृथिवीनामधेयस्य भूशब्दस्य रूपम्। किं तर्हि। भवतेर्लङि[५] उत्तमपुरुषैकवचने छान्दसत्वादडभावः। अकारस्य उत्वं च[६]। अभवम्। भवामि। वसुनः। वसु इति धननाम। धनस्य सर्वस्य। पूर्व्यः। पुराणनामेदम्। पुराणः नित्यः। पतिः स्वामी। अहमेव धनानि[७]। प्रधन इति सङ्ग्रामनाम्नः[८] प्रशब्दलोपे[९] द्वितीयाबहुवचनान्तमेतत्[१०]। संजयामि सम्यक् बहुसुहृद्बधवर्जं[११] जयामि। शश्वतः। शश्वच्छब्दो बहुवचनः। बहून्। अथवा[१२] संजयामि बहोः। शत्रोः इति[१३] शेषः। मामेव[१४] हवन्ते आह्वयन्ति सर्वे यजमानाः ज्योतिष्टोमादिषु[१५] कर्मसु। कमिव[१६]। पितरं न। नशब्द उपमार्थः[१७]। पितरमिव। जन्तवः। मनुष्यनामैतत्। मनुष्याः सर्वकर्मसु। अहमेव दाशुषे। दाश्वानिति शाकपूणिना नैरुक्तकाचार्येण[१८] यजमाननामसु पठ्यते[१९]। हवींषि दत्तवते यजमानाय[२०]। विभजामि ददामि। भोजनम्। धननामैतत्[२१]। धनम्। यो यावद्ददाति हविर्मनाक् बहु वा अहमपि[२२] तस्मै तावदेव ददामीत्यर्थः। कुतः। यादृगिव वै देवेभ्यः करोति तादृगिवास्मै[२३] देवाः कुर्वन्ति[२४]—इति श्रुतेः[२५]।

**पृच्छामि त्वा परमन्तं पृथिव्याः**
**पृच्छामि यत्र भुवनस्य नाभिः।**
**पृच्छामि त्वा वृष्णो अश्वस्य रेतः**
**पृच्छामि वाचः परमं व्योम[२६]॥** ॥ ९ ॥

इति प्रश्नः। दीर्घतमस आर्षम्। विज्ञानमयं क्षेत्रं पृच्छति ऋत्विग्गणो यजमानम्। पृच्छामि त्वा त्वाम्। परं उत्कृष्टम्। अन्तम्[२७]। अन्तःशब्दः[२८] प्रदेशवचनः[२९]। पृथिव्याः अतिशयेन सारभूतं प्रदेशं त्वां[३०] पृच्छामि। पृच्छतेर्द्विकर्मकत्वस्मरणात्[३१]

द्विकर्मकप्रयोगः[१]। यत्रशब्दो यःशब्दार्थे[२] द्रष्टव्यः। यः भुवनस्य[३] भूतजातस्य। नाभिः। नाभिशब्देनाश्रय[४] उच्यते। तथा च नाभिः[५] सन्नहनात् प्रदेशवचनः[६]—इति निरुक्तम्। संनद्धं हि तेनाङ्गेन कृत्स्नं शरीरं प्राणधारणत्वात्। तं त्वा पृच्छामि इति संबन्धः। पृच्छामि त्वा त्वाम्। वृष्णः वर्षयितुः। अश्वस्य रेतः। पृच्छामि सर्वत्र अध्वर्य्वादिरूपाया वाचः परममुत्कृष्टम्[७]। व्योम स्थानम्॥

**इयं वेदिः परो अन्तः पृथिव्या**
**अयं यज्ञो भुवनस्य नाभिः।**
**अयं सोमो वृष्णो अश्वस्य रेतो**
**ब्रह्मायं वाचः परमं व्योम[८]॥** ॥ १० ॥

इति व्याकरणं प्रतिवचनम्। पूर्वस्मिन् मन्त्रे चत्वारः प्रश्नाः कृताः। तेषामानुपूर्व्येण चत्वारि प्रतिवचनान्यनेन प्रतिपाद्यन्ते। इयं वेदिर्यागभूमिः[९]। परः उत्कृष्टः। अन्तः सारभूतः। पृथिव्याः। कुत एतत्। देवयजनं वै परं पृथिव्याः[१०]—इति श्रुतेः। अयं यज्ञो भुवनस्य भूतजातस्य[११]। नाभिः आश्रयः[१२]। तथा च स्मरणम्—

यज्ञो विभूत्यै सर्वस्य[१३]।

इति। अयं सोमः ग्रहचमसादिपात्रस्थः। वृष्णो बर्षयितुः। अश्वस्य[१४] व्याप्तुरिन्द्रस्य। रेतः। कथम्। अयमेवं हि पीतो रसादिक्रमेण इन्द्रस्य रेतो वीर्यं मदोत्सेधमापादयति। ब्रह्मायं अयमेव हि ब्रह्मा ब्रह्मासनमध्यासीनः। वाचः सर्वस्या अध्वर्य्वादिरूपायाः। परमं उत्कृष्टम्[१५]। व्योम स्थानम्। कथम्।

ब्रह्मा परिवृढः[१६] श्रुतः[१७]।

इति[१८] वचनात्[१९]। त्रय्या विद्यया ब्रह्मत्वं कुर्यात्[२०]—इति श्रुतेः। यो हि निगमनिरुक्त[२१]व्याकरणादिकलापयुक्तः स[२२] एव ब्रह्मत्वं कर्तुमर्हति नान्यः। इति॥

**इदमापः प्र वहत**
**यत्किं च दुरितं मयि ।**
**यद्वाहमभिदुद्रोह**
**यद्वा शेप उतानृतम्[१]॥** ॥ ११ ॥

इति शोधितः। अयमपि मन्त्रो द्वितीये कल्पे व्याख्यातः[२]।

**इन्द्र क्रतुं न आ भर**
**पिता पुत्रेभ्यो यथा ।**
**शिक्षा णो अस्मिन् पुरुहूत यामनि**
**जीवा ज्योतिरशीमहि[३]॥** ॥ १२ ॥

इति विकल्पः[४]। अनेकवाक्यकल्पनया विकल्पः[५]। देवताविकल्पे वा। वायुः इति नैरुक्ताः। सूर्य इति याज्ञिकाः। शक्तिर्नाम वसिष्ठपुत्रः[६]। तस्यार्षम्। प्रथमं तावद्याज्ञिकमतेन[७] व्याख्यायते[८]। इन्द्र। इन्धे दीपयति[९] रश्मिद्वारेणानुप्रविश्य भूतानि इति इन्द्रः आदित्य[१०] उच्यते। असौ वा आदित्य इन्द्रः[११]—इति श्रुतेः[१२]। इन्द्र आदित्यः[१३]। क्रतुम्[१४]। क्रतुरिति कर्म वा प्रज्ञा वा उच्यते। कर्म अतिरात्रयाग-फललक्षणम्। नः[१५] अस्माकम्। आभर आहर। पिता पुत्रेभ्यो यथा। यथा[१६] पिता पुत्रहितेच्छया कर्म दृष्टानुश्रविकसुखसाधनमारभेत[१७] तद्वत्। किंच शिक्षा। शिक्षति-र्दानकर्मा। देहि। नः अस्मभ्यं अन्यदप्यभिलषितम्[१८]। अस्मिन्[१९]। हे पुरुहूत पुरु-स्तुत। यामनि[२०]। यातेर्मनिन्प्रत्ययः। यापयति स्वर्गं स्थानं इति[२१] यामन्शब्देन यज्ञोऽभिधीयते। यज्ञे। जीवाः। मत्वर्थीयोऽच्प्रत्ययः[२२]। जीववन्तः। चिरमपि जीवन्त[२३] इत्यर्थः। ज्योतिः आभ्यन्तरम्। अशीमहि। अशू व्याप्तौ। व्याप्नुयाम[२४]। त्वया सायुज्यं गमिष्याम इत्यभिप्रायः। नैरुक्तपक्षेऽपि इन्द्रो दानादिगुणो मध्यम[२५]-स्थानो वायुरुच्यते। हे इन्द्र[२६]। क्रतुं वृष्टिलक्षणम्। नः[२७] अस्माकम्। आभर आहर। पिता पुत्रेभ्यो[२८] यथा धननिमित्तं कर्म। शिक्ष देहि। नः अस्मभ्यं[२९] स्तोतृभ्यः। का-मानिति शेषः। अस्मिन्। हे पुरुहूत पुरुस्तुत। यामनि। यापयति क्षपयति भूतानीति

धामन्शब्दः[१] कालवचनः। काले वर्षाख्ये। त्वद्दत्तेन उदकेन जीवाः जीववन्तः[२]। ज्योतिः परमात्माख्यम्। अशीमहि। तेन सायुज्यं गमिष्याम इत्यभिप्रायः ॥

**यदिन्द्राहं यथा त्व-**
**मीशीय वस्व एक इत्।**
**स्तोता मे गोषखा स्यात्[३]॥ ॥ १३ ॥**

इति संकल्पः। गोसूक्तेर्वा अश्वसूक्तेर्वा आर्षम्। यदि हे इन्द्र अहम्। यथा त्वं सर्वस्य धनस्य ईश्वरोऽभूः। तथा अहं ईशीय ईश्वरो भवानि। वस्वः वसुनो धनस्य सर्वस्य। एक इत्। इच्छब्दोऽवधारणार्थः। एक एव। तथा सति स्तोता मे मम। गोषखा गवां सखा स्वामी। स्यात् भवेत्। प्रदर्शनार्थमिदं गोग्रहणम्। गवादीनां धनानां पतिर्भवेत्। एतदुक्तं भवति। यदि[४] त्वं सर्वेश्वर मह्यं स्तात्रे बहु धनं ददासि अहमपि अभिलषितैरर्थैः स्तोतॄणां मनोरथं पूरयेयं इति संकल्पः ॥

**सुदेवो अद्य प्रपतेदनावृत्**
**परावतं परमां गन्तवा उ।**
**अधा शयीत निर्ऋतेरुपस्थे-**
**ऽधैनं वृका रभसासो अद्युः[५]॥ ॥ १४ ॥**

इति परिदेवना। उर्वश्या वियुक्तः पुरूरवा विललाप। शोभनं देवनं क्रीडनं यस्य स सुदेवः। यथाभिलषितं परिभुक्तसर्वभोग इत्यर्थः। अद्य संप्रत्येव। शिखरिशिखरमारुह्य प्रपतेत् प्रकर्षेण पतति[६]। अनावृत्। आवर्तनमावृत्[७]। अनावर्तनम्। क्रियाविशेषणमेतत्। किमर्थम्। परावतं परमां[८] अत्यन्तदूरम्[९]। यमलोकं इत्यर्थः। गन्तवै गन्तुम्[१०]। उकारः पदपूरणः। गतश्च सन् अध। अथशब्दपर्यायः[११]। अनन्तरम्। शयीत निर्ऋतेः प्रलयाधिदेवतायाः। उपस्थे अङ्के। समीपसप्तम्येषा। कूपे गर्गकुलं[१२] इति यथा। यमस्य समीपे गत्वा शेत[१३] इत्यर्थः। शयितं च अध[१४] अनन्तरमेव। एनं वृकाः विकर्तनयुक्ताः तत्पुरुषाः। रभसासः[१५]। रभसशब्दो वेगवचनः। मत्वर्थी-

याच्प्रत्ययान्तो[१] द्रष्टव्यः[२]। वेगवन्तः । अद्युः भक्षयेयुः । अथवा उत्तरस्यार्धर्चस्य अन्यथा योजना। अध[३] अनन्तरम्। शयीत निश्शेत इत्यर्थः । शयीत निर्ऋतेः[४]। निऋतिः इति[५] पृथिवीनाम। पृथिव्याः। उपस्थे[६] सानुदेशे शयीत[७]। शयितं च अध[८] अनन्तरमेव। एनं वृकाः विवर्तनशीला मृगाः । रभसासः वेगवन्तः[९]। अद्युः भक्षयेयुः। तया वियुक्तो नाहं कष्टं जीवामि धिङ्मां इत्यभिप्रायः। एवमैतिहासिकपक्षे योजना। नैरुक्तपक्षे तु। पुरूरवा मध्यमस्थानः[१०] वाय्वादीनामेकत्वात्[११]। पुरु रौतीति[१२] पुरूरवाः। उर्वशी विद्युत् उरु विस्तीर्णं अन्तरिक्षं व्यश्नुत इति उर्वशी[१३]। वर्षकाले विद्युति विनष्टायां[१४] तया वियुक्तः स्तनयित्नुलक्षणं शब्दं कुर्वन् विलपति। सुदेवः[१५] सुक्रीडः। अद्य प्रपतेत् अस्मात् स्थानात् अन्तरिक्षात्। अनावृत् अनावर्तनम्। परावतं परमां अत्यन्तदूरं पृथिवीलोकं गन्तवै गन्तुं अपर्यन्तधारात्मना। गतश्च[१६]। अध[१७] अनन्तरं शयीत निर्ऋतेः पृथिव्या उपस्थे। उपगम्य आपो यत्र तिष्ठन्ति स उपस्थः कटकादि-प्रदेशः। तस्मिन्। अध[१८] अनन्तरम्। एनं उदकात्मना अवस्थितम्। वृकाः। अद्युः[१९] भक्षयेयुः इत्यर्थः। एवं नैरुक्तपक्षे योजना। औपचारिकोऽयं मन्त्रेष्वाख्यानसमयः[२०]। नित्यत्वविरोधात्। परमार्थेन तु नित्यपक्ष एव इति नैरुक्तानां सिद्धान्तः[२१]॥

**यत्ते यमं वैवस्वतं**
**मनो जगाम दूरकम्।**
**तत्त आ वर्तयामसी-**
**ह क्षयाय जीवसे**[२२]॥ ॥ १५ ॥

इत्यनुबन्धः। अत्रैवं श्रूयते। असमातिनाम्नो राज्ञः पुरोहिताभ्यां मायाविभ्या-मपहृतप्राणं सुबन्धुं भ्रातरं दृष्ट्वा शोकसन्तप्तहृदया[२३] बन्ध्वादयस्त्रयो भ्रातरो[२४] मनसः पुनरावर्तनं जेपुः यत्ते यमं इति सूक्तं इति[२५]। यत्ते तव मनः इति संबन्धः। यमं प्रेतराजम्। वैवस्वतं[२६] आदित्यम्। सरण्यूर्यमजीजनत्[२७] तं वैवस्वतम्। मनः। मनः-शब्देनात्र अन्तर्यामी[२८] प्रधानभूतः प्राण उच्यते। तथाहि श्रूयते[२९]—प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति[३०]—इति। जगाम गतवान् दूरकम्। विशेषणमेतत्। दूरेऽपि

सन्[१] प्राणिनां वृत्तान्तं केतति जानाति इति दूरकम्। तत्ते तव[२]। आवर्तयामसि आवर्तयामः। पुनरानेष्याम इत्यर्थः। किमर्थम्। इह लोके। क्षयाय निवासाय। जीवसे जीवितुम्। सुखं जीवनाय च इत्यर्थः ॥

**प्रयाजान्मे अनुयाजांश्च केवला-**
**नूर्जस्वन्तं हविषो दत्त भागम्।**
**घृतं चापां पुरुषं चौषधीना-**
**मग्नेश्च दीर्घमायुरस्तु देवाः[३]॥ ॥ १६ ॥**

इति याच्ञा। एवं[४] कथा श्रूयते। सौचीकमग्निं विश्वे देवा ऊचुः। हव्यं नो वह इति। सोऽग्निरब्रवीत्। अभागोऽहं यज्ञे। मृत्योश्च बिभेमि[५]। इति। ते देवाः[६] पुनरब्रुवन्। अभिलषितं ब्रूहि इति। ततो[७] हविर्भागं अविनश्वरमायुश्चानयर्चा याचते[८]। प्रयाजान् मे मह्यम्। अनुयाजांश्च केवलान्। अनन्यदेवत्यान्[९]। मद्देवत्याने[१०]-वेत्यर्थः। सिंहावलोकनन्यायेन[११] दत्त इत्याख्यातं अपकृष्टव्यम्। दत्त[१२]। ऊर्जशब्दोऽन्न-वचनः। अन्नवन्तम्। अन्नविकारं[१३] पुरोडाशम्। हविषो भागं दत्त। घृतं च आज्य-भागाख्यम्। अपाम्। विकारभूतमिति वाक्यशेषः। पुरुषं च। बहु कर्म[१४] सुनोति इति पुरुषः[१५] सवनीयः पशुरुच्यते। तेन विधीयन्ते[१६] सवनानि। तथाहि—वपया प्रातःसवने चरन्ति। पुरोडाशेन माध्यंदिने[१७]। अङ्गैस्तृतीयसवने[१८] प्रचरन्ति[१९]—इति वचनात्। तं च सवनीयम्। ओषधीनाम्। अत्तारं इति शेषः। अग्नेश्च मम। दीर्घं शाश्वतम्। आयुः अस्तु भवतु। हे देवाः ॥

**तव प्रयाजा अनुयाजाश्च केवल**
**ऊर्जस्वन्तो हविषः सन्तु भागाः।**
**तवाग्ने यज्ञोऽयमस्तु सर्व-**
**स्तुभ्यं नमन्तां प्रदिशश्चतस्रः[२०]॥ ॥ १७ ॥**

इति प्रसवः अभ्यनुज्ञा[२१]। एवमग्निना याचिता विश्वे देवाः प्रत्यूचुः। तव[२२] प्रयाजा

अनुयाजाश्च केवले देवतान्तररहिताः । ऊर्जस्वन्तः[१]। ऊर्जशब्दो रसवचनः। हविषः संबन्धिनः। सन्तु भवन्तु। भागाः परिगणिताः प्रार्थिताः। तदधिकमपि[२] दद्म। तवैव। हे अग्ने। यज्ञः अयं सर्वः। अस्तु[३]। यदि कामयसे। किंच तुभ्यम्। तादर्थ्ये चतुर्थ्येषा। त्वदर्थम्। नमन्तां प्रह्वीभवन्तु। प्रदिशः प्रकृष्टा दिशः। चतस्रः प्राच्याद्याः। सर्वासां च[४] दिशां त्वमेवेश्वरो भवेः[५] इति प्रसादातिरेकः[६] कथ्यते। महतां[७] हि प्रसादः अनेकभद्रः इति[८]॥

**ओ चित्सखायं सख्या ववृत्यां**
**तिरः पुरू चिदर्णवं जगन्वान्।**
**पितुर्नपातमा दधीत वेधा**
**अधि क्षमि प्रतरं दीध्यानः[९]॥ ॥ १८ ॥**

इति संवादः। उक्तिप्रत्युक्तिरूपः संवादः इत्युच्यते[१०]। प्रथमं तावदैतिहासिकमतानुसारेण[११] अयं मन्त्रो[१२] व्याख्यायते। यमयम्योः संवादसूक्तम्[१३]। विवस्वतो दुहिता यमं भ्रातरं मदनपरवशीकृता[१४] सर्वेन्द्रियप्रतिभोगार्थं[१५] चकमे। ओ चित्। आ उ ओ। उकारः पदपूरणः[१६] चिच्छब्दश्च। आकारो ववृत्यां इत्येतेन संबध्यते। सखायं यमम्। सख्या। तृतीयैकवचनं प्रथमैकवचनस्य स्थाने। सखी सती। ववृत्यां इत्येतच्छान्दसं[१७] रूपम्। आभिमुख्येन कामये इत्यर्थः। तिरः। क्रियाविशेषणमेतत्। समयविरोधात्[१८] प्रच्छन्नम्। वाक्यार्थसंपादनार्थं[१९] यत्तच्छब्दावध्याहार्यौ। यमहं[२०] कामये सोऽपि। पुरु इति बहुनाम। चिच्छब्दः चार्थे[२१]। बहु च। अर्णवम्। अर्णःशब्देन[२२] उदकमुच्यते। द्रवरूपसामान्याद्रेत उच्यते। मत्वर्थीयो[२३] वकारः। अर्णसो लोपश्च[२४] इति सकारलोपः। अर्णवं बहुरेतस्कमित्यर्थः[२५]। जगन्वान् गतवान् प्राप्तवान्। प्राप्ताभिनवयौवन एव इत्यर्थः। अतः पितुः स्वस्य अपि विवस्वतः[२६]। नपातम्। नपात् इति अननन्तरायाः प्रजाया नामधेयम्। पौत्रं इत्यर्थः। आदधीत कारणभूतं. गर्भम्। मयि इति शेषः। वेधाः मेधावी[२७]। अधि क्षमि। अधि इत्युपरिभावे[२८]। छान्दसमेतद्रूपम्[२९]। क्षमा पृथिवी। तस्या[३०] उपरि। पृथिवीलोके इत्यर्थः। प्रतरं प्रकृष्टतरं

पुत्रोत्पादनेन। दीध्यानः दीप्यमानः। एवमैतिहासिकपक्षे योजना। नैरुक्तपक्षे तु[1]। यमी मध्यमस्थाना वाक्। यमश्च मध्यमस्थानः। सा यमी[2] वर्षकाले[3] मध्यमस्थानं आह। आ आभिमुख्येन[4]। सखायं[5] सहस्थानयोगात्। सख्या[6]। सखीत्यर्थः। कामयेय[7]-महम्। कामयेत् सोऽपि। तिरः[8]। तिरः सत इति प्राप्तस्य नामनी[9]। प्राप्तवर्षसमयः। बहुलं उदकभूयस्त्वं गतवान्। गतश्च स्वस्य पितुरादित्यस्य। कथमादित्योऽस्य[10] पिता। उच्यते। आदित्यो रश्मिभिः पर्यावर्तमानः रसान् मध्यमाय अर्पयन् तं पाति। ततोऽसौ अस्य[11] पितेत्युच्यते। तस्य आदित्यस्य नपातं एकान्तरितत्वात् पौत्रस्थानीय-मुदकसङ्घातं[12] आ दधीत[13] वेधाः विविधं वृष्टिप्रदानेन पाता[14] धारयिता सर्वस्य जगतः। अधि क्षमि पृथिव्या उपरि[15]। पृथिव्यामित्यर्थः। दीध्यानः। ध्यै चिन्तायाम्। चिन्तयन् कथं नु नाम लोकः सुखं जीवेत् इति। एवं नित्यत्वाविरोधेन योज्यम्॥

**सोमं[16] राजानमवसे-**
**ऽग्निं गीर्भिर्हवामहे।**
**आदित्यान् विष्णुं सूर्यं**
**ब्रह्माणं च बृहस्पतिम्[17]॥ ॥ १९ ॥**

इति समुच्चयः। अग्नेस्तापसस्यार्षम्[18]। सोमं राजानम्। अवसे रक्षणायात्मनः। अग्निं गीर्भिः स्तुतिभिः। हवामहे आह्वयामः। अभिष्टुम[19] इत्यर्थः। आदित्यान् विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं[20] च। एतदुक्तं भवति। त्रिस्थाननिवासिनो देवान्[21] वन्दामहे। तेऽपि नः प्रसीदन्तु भक्तानामभिलषितस्य प्रदातारः[22]। इति॥

**भोजायाश्वं सं मृजन्त्याशुं**
**भोजायास्ते कन्या शुम्भमाना।**
**भोजस्येदं पुष्करणीव वेश्म**
**परिष्कृतं देवमानेव चित्रम्[23]॥ ॥ २० ॥**

इति प्रशंसा। प्रजापतेर्दुहिता दक्षिणा नाम। तस्या आर्षम्। दानप्रशंसैषा। भोजयति इति भोजः अन्नदाता[24] उच्यते। कुत एतत्।

स इद्भोजो[१] यो गृहवे ददात्यन्नकामाय[२] चरते कृशाय[३]।

इति मन्त्रान्तरे दर्शनात्। तस्मै तदर्थम्। अश्वं संमृजन्ति संस्कुर्वन्ति[४] विधिना शालिहोत्रोपदिष्टेन[५] निपुणाः परिचारकाः[६]। कीदृशं अश्वम्। आशुं शीघ्रगतिं कम्बोजादिदेशजातम्[७]। किंच भोजाय आस्ते कन्या कमनीया लावण्यातिशयविशेषेण[८] शुम्भमाना वस्त्रालङ्कारादिना च दीप्यमाना। भोजस्य इदं पुष्करिणी इव पुष्करिणीसदृशं हृदयाह्लादनसहितम्[९]। वेश्म गृहम्। परिष्कृतं मनोरमणीयचित्रकर्मकुट्टिमशोभया[१०] सर्वतो विभूषितम्। देवमाना। प्रथमैकवचनस्य सुपां[११] सुलुक्[१२] इत्याकारः। देवमानमिव चित्रं विचित्रं आश्चर्यभूतम्। अल्पमिदमुक्तम्[१३]। यत्किंचित् दुर्लभं जगति[१४] भद्रमस्ति तस्य सर्वस्य[१५] भाजनं[१६] भोजः इति।

**अद्या मुरीय यदि यातुधानो अस्मि**
**यदि वायुस्ततप पूरुषस्य।**
**अधा स वीरैर्दशभिर्वि यूया**
**यो मा मोघं यातुधानेत्याह**[१७]॥ ॥ २१ ॥

इति शपथः। वसिष्ठस्यार्षम्। अत्रेतिहासमाचक्षते[१८]। विश्वामित्रप्रयुक्तः[१९] किल कश्चिद्राक्षसो मायावी वसिष्ठरूपेण वसिष्ठस्य पुत्रशतं जघान। ततो[२०] वसिष्ठं प्रति अपवादशङ्का अजायत। लोकनिर्वादवज्रेण अभिहतः पुत्रवियोगशोकाग्निसंतप्यमानहृदयश्च[२१] वसिष्ठः प्रस्तुतनिवृत्तये पैजवनस्य राज्ञः[२२] समक्षं शपथं चकार। अद्या मुरीय यदि इति[२३]। अद्य अस्मिन् काले। मुरीय म्रियेयम्। यद्यहं यातुधानः पिशिताशनः। अस्मि भवामि। यदि वा आयुः यदि वा अस्य आयुः जीवितम्। ततप तपिरत्र नाशार्थः। नाशितवानहम्। पुरुषस्य यस्य कस्यचित्। अध। अथशब्दपर्यायः। स च हेतौ। यत एतदलीकम्। सः सोऽपि। वीरैः पुत्रैः। दशभिः वियूयाः पुरुषव्यत्ययः[२४]। वियूयात्[२५]। यौतिः पृथग्भावे वर्तते। पृथग्भवेत्। यः[२६] मा मां शुद्धात्मानम्। मोघं व्यर्थमेव। यातुधान इति आह[२७] यातुधान इत्येवं असूयया[२८] अक्षममाण आह। सोऽप्यहं इव हतपुत्रः[२९] पुत्रवियोगाग्निसंतप्यमानहृदयः शयीत इत्यर्थः॥

